**प्रिया: क्रीडापटव:**
व्ही. आनन्द:, धोनी, सचिन:, गॅरी कास्पारोव, पी.टी उषा, आर्. अश्विन:
**प्रियाणि व्यङ्गचित्राणि**
टॉम ॲण्ड जेरी
**प्रियं खाद्यम्**
गृहनिर्मितम्
**अन्या: प्रिया: क्रीडा:**
जलतरणं तथा बास्केट-बॉलक्रीडा
**रुचय:**
नाणकसङ्ग्रहणं, वाचनं च।

यदि भवताम् परिचये कुटुम्बे परिसरे कोऽपि बाल्ये एव प्राप्तयशा: बाल: अस्ति चेत् कृपया तस्य/तस्या: विवरणं स्वसन्दर्भं दत्त्वा अस्मान् प्रति प्रेष्यताम्।

Young Achievers-RCM,
Chandamama India Ltd,
No:2 Ground Floor, Swathi Enclave, Amman koil street, Vadapalani, Chennai-26
(or)
online@chandamama.com

# बुद्धिबलपटु:

**बा**ल्ये एव नुबाई बुद्धिबलक्रीडां पठितवान्। तस्य अल्पम् आयु: चिन्तयाम: चेत् अल्पीयसि वयसि बुद्धिबलक्रीडायां तेन प्रावीण्यम् अधिगतं विपुला: पुरस्कारा: च प्राप्ता:। सद्य: एव चेन्नई इत्यत्र जातायां तृतीय-अन्तरराष्ट्रीय-बुद्धिबलप्राविण्य-(Grand masters) प्रतियोगितायां तेन 'International masters' पदवी प्राप्ता। U-१४ गणे आशियाई-बुद्धिबल- प्रतियोगितायां स: अष्टम: आसीत्। यदा world youth chess championship इत्यत्र स: भारतस्य प्रतिनिधित्वम् अकरोत्, तदा वियेत्नाम-देशस्य उत्कृष्टपटून् जितवानयम् एकाकी बुद्धिबलपटु: आसीत्। २००८ तमे वर्षे स: ५ पदकानि प्राप्तवान्।

२००९ तमे वर्षे Asian Chess championship मध्ये स: U ९ गणे उत्तमं सादरीकरणं कृतवान्। स्वस्य आदर्श: विश्वनाथ आनन्द: इव Grand masters पदवी प्राप्तव्या इति इच्छति नुबाई।



जिलास्तरे,राज्यस्तरे राष्ट्रीयस्तरे च प्राप्तै: विविधै: पुरस्कारै: पूर्णा कपटिका नुबाईबालस्य ॥

शुभकामना: तुभ्यं नुबाई!



नवम्बर २०११
*Founded by* B. Nagi Reddi and Chakrapani
Editor & Publisher :
Prashant Sharad Mulekar
Associate Editors :
R. Vaasugi, K. Raja Sekhara Raju
Sub Editor :
Patricia Pandian
Content Head - Online :
Sowmya Bharadwaj
Senior Artists:
K.C. Sivasankaran (Sankar), Gandhi Ayya, P. Mahesh, Sandeep Solkar
Artist :
Venki
Layout Designers :
B. Thirumal, K. Narendra, N. Sivakumar
Production In-charge :
Prashant Pawar
Circulation:
circulation@chandamama.com
Asst. Manager - Sales & Circulation:
Subhankar Rej
Sales Officer - Circulation :
K. Ravishankar
Advertisement :
sales@chandamama.com
Subscription :
subscription@chandamama.com
Ramya K (Chennai)
Ph: +91 44 4399 2828
Head Office :
CHANDAMAMA INDIA LTD.,
P.O.Box No:19407, Mumbai-400093
Phone +91 22 28312872 / 28311849
Email:chandamama@chandamama.com
Website : www.chandamama.com

Published, Printed and Owned by CHANDAMAMA INDIA LTD., Published and Printed on their behalf by Prashant Sharad Muleker Published at B-3, Cross Road 'B', MIDC, Andheri (East) Mumbai - 400093. Printed At :- Kala Jyothi Process Pvt. Ltd, S.No.185, Kondapur, R.R.District-500133, Andhra Pradesh. Editor :- Prashant Sharad Mulekar

S

# अन्तरङ्गम्

## चन्दमामा

Volume-2 November 2011 Issue-11

**न**मोनमः प्रियमित्राणि!!!

दीपोत्सवस्य सुखदस्मृतिभिः इतोऽपि व्यापृतं मनः, तावदेव नवेम्बरमासस्य आगमनं जातम्। मधुरखाद्यानि, अलङ्करणं, प्रज्वलितदीपाः, स्फोटकानि, सुहृद्बान्धवैः साकम् अनुभूतः आनन्दः इत्येतैः कारणैः न कदापि समाप्तिमाप्नोतु अयम् उत्सवः इत्येव सर्वेषां मनःस्थितिः स्यात्।

प्रतिवर्षमिव अस्मिन् मासे १४ दिनाङ्के भारतस्य आद्यप्रधानमन्त्रिणः चाचा उपाख्यस्य नेहरुमहोदयस्य जन्मतिथिः वर्तते। बालानां विषये तस्य प्रेमा सर्वविदितः अनुकरणीयः च। सर्वप्रत्यूहान् दूरीकृत्य अग्रे गन्तुं शक्तिः लभ्यते तस्य पुण्यस्मरणात्। सः अस्माकं प्रेरणास्थानम्।अस्मिन् सन्दर्भे भारतस्य प्रथमप्रधानमन्त्रिणा श्रीमता जवाहरलालनेहरूमहोदयेन 'चन्दमामा' निमित्तं शुभाशयाः प्रकटीकृताः तस्य स्मरणं भवति ।नोव्हेंबरमासे बालदिनसन्दर्भे तस्य शुभाशयाः राष्ट्रं प्रति अस्माकं कर्तव्यं स्मारयन्ति. तदर्थं प्रचोदयन्ति अपि।

जागतिकसंशोधकदिवसः आचर्यते नोव्हेंबरमासस्य ९ दिनाङ्के। प्रख्याता संशोधिका हॉलिवूडचित्रतारका 'हेडी लॅमर्' इत्यस्याः सा जन्मतिथिः। प्रसिद्धा श्रीयुता चेयं चित्रतारका स्वसंशोधनेन अमरत्वं प्राप। अद्यापि तया कृतं संशोधनं वयं चलभाषयन्त्रेषु उपयुञ्ज्महे। ईदृशाः बहुमुखिप्रतिभावन्तः जनाः सदा अस्मान् प्रेरयन्ति। प्रत्येकं जनेषु अपि प्रच्छन्नः कल्पकः संशोधकः वर्तते यस्य स्वागतम् अस्माभिः करणीयम्।

मोबिसोडस् तथा श्राव्यकथानाम् अतीव उत्साहवर्धकः अनुभवः अस्ति। कृपया तदास्वाद्य प्रतिस्पन्दः प्रेष्यताम् इति सर्वेभ्यः अभ्यर्थना।

*- संपादकः*



# वाचकानां पुटोऽयम्

चन्दमामाया: परिवर्तितरुपविषये वाचकानां मतं भवद्भि: पृष्टमासीत्। अस्माकं मतं यत् कृपया अस्माकं पुरातन-चन्दमामा परिवर्तनम् अकृत्वा समयेन च प्रेष्यताम्। कथावाङ्मयार्थ चन्दमामा प्रसिद्ध: न तु शीर्षकार्थम्। चन्दमामाम् रूपान्तरेण अभिज्ञातुम् एव न शक्नुम:। अस्माकं मतानुसारम् अधुना प्रकाश्यमानाया: चन्दमामाया: अन्तिम १२ पृष्ठानि अनावश्यकानि। पुन: पुन: वयं कथा: एव इच्छाम:। *- डॉ. विजया सागर, सेठ, जवाहर, गुंटूर, आन्ध्रप्रदेश:*

चन्दमामीया: सर्वा: अपि कथा मनोज्ञा: यत: कदाचित् ता: पुराणकथा: अपि भवन्ति। ता: पठित्वा एव वयम् अस्माकं ज्ञानवर्धनमपि कर्तुं शक्नुम:। मह्यं ' सुडोकू प्रहेलिका' नितरां रोचते। सम्प्रति सा न प्रकाश्यते। तेन मम मन: उद्विग्नम्। कृपया 'सूडोकू प्रहेलिकां पुन: प्रकाशयतु। अन्यभाषां पठितुं य: इच्छति तस्मै सा निश्चयेन रोचेत। चन्दमामाया: प्रकाशनार्थं भवद्भ्य: सर्वेभ्य: हार्दिकान् धन्यवादान् वितरामि। चन्दमामा चिरं जीवतु इति मे इच्छा। *- एन्. गीताञ्जली, बँगलोर*

लघुबालकानां प्रियं मासिकं नाम चन्दमामा। एषा नैकासु भाषासु उपलब्धा इत्येव तत्र वैशिष्ट्यम्। न केवलं तावत्, चन्दमामा भारते प्राचीनतमा बालमासिकपत्रिका वर्तते। तत्र सर्वा: अपि कथा: चित्ताकर्षका: भवन्ति। एषा बालपत्रिका मह्यम् आजीवनं पठनानन्दं यच्छेत् इत्यस्ति मे दृढ: विश्वास:। *- शुभदीप:, झारखण्ड:*

अहं चन्दमामाया: नियतवाचक: अस्मि। सर्वमासिकेषु एषा उत्तमा मासिकपत्रिका। एतस्या: पठनात् मया बहु बोध: प्राप्त:। तत्रत्या: कथा: अद्भुता: अत एव मे प्रिया:। अहं चन्दमामापठनात् कदापि न विरमामि। *- राकेश पाल, भद्रक, ओरिस्सा*

सप्टेंबर मासस्य चन्दमामापत्रिका मया आगस्टमासे २७ दिनाङ्के एव प्राप्ता। तत्र मुखपृष्ठे श्री वपामहोदयेन आलिखितं गणेशस्य चित्रं नितरां मनोहरम् आसीत्। चन्दमामापत्रिकाया: पुरातनसम्पद् पुनरायाता इति मे प्रतिभाति। अन्या: कथा: अपि मनोज्ञा:।

*- ए. गोविन्द राजुलु, विशाखापट्टणम्*

श्री. वपा महोदयेन आलिखितेन चित्रेण सप्टेंबर मासस्य चन्दमामा चारुतरम् अभात्। श्री. वपा महोदयस्य नैकेषु चित्रेषु एतद अत्युत्तमम् आसीत्। अनन्तरं वयं श्री. शङ्करगुरु महोदयेन लिखितम् आपृष्ठात्मकं वेतालकथाया: चित्रं दृष्टवन्त:। प्राय: चन्दमामाया: इतिहासे प्रथमतयैव वेतालकथायां सम्पूर्ण-पृष्ठात्मकं चित्रं प्रकाशितम्। शङ्करमहोदयस्य कल्पनाशक्ति:, चित्रसौन्दर्य च यथापूर्वम् अद्भुतं वर्तते। *- सरय्या, करिमनगरम आन्ध्रदेश:*

**व**यं सप्टेंबर-मासस्य पत्रिकां समयेन प्राप्तवन्तः। चन्दमामायाः मुखपष्ठविषये तथा चित्रकर्तुः कलासामर्थ्यविषये इतः पूर्वं चन्दमामया न कदापि चर्चा कृता इति अत्र वैशिष्ट्यं दृष्टम्। श्री. वपामहोदयः चन्दमामायाः जीवनमेव। एतत् ज्येष्ठकलाकारस्य श्री. शङ्करगुरु महोदयस्य विषये अपि वक्तुं शक्यते। पुरातनकथानां नूतनकथानां मिश्रणेन वयं सर्वे नितरां मोदामहे। अस्माकं प्रिया चन्दामामा प्रकाशनानन्तरं ६० वर्षाणि यावत सम्पूर्णं भारतं रञ्जयन्ती अस्ति। शततमे वर्षेऽपि चन्दमामा-पठनस्य इच्छा अतिशयोक्तये न भवति।

*- बी. राजेश्वरमूर्ति, चिलकलापुडी, आन्ध्रप्रदेशः*

**च**न्दमामा सकुटुम्बं समित्रपरिवारम् सदा अस्मान् रञ्जयति। सर्वासां कथानां पठेनन वयं नितराम् आनन्दम अनुभवामः। अस्मिन् अङ्के प्रत्येकं कथा समाप्तिम् अगच्छत्। मालिकाभिः सह आहत्य १९ कथाः युष्माभिः प्रकाशिताः आसन्। कपया भविष्यति काले एतत् अनुअवर्तताम्। कृपया काचित् पौराणिक-कथामालिका प्रकाश्यताम्।

*- एस्.एस्.व्ही.एल्.आर्.सी.महर्षि, रङ्गरेड्डी आन्ध्रप्रदेशः*

'**म**त्स्मृतयः' नितरां रमणीयाः आसन्। भवन्तः एकवारं चन्दमामां पठन्तु, न कदापि भवन्तः तस्मात् विरमेयुः इति श्री. धुमाळ महोदयस्य वाक्यं सत्यमेव। अनन्तरं पुनः सप्टेंबर मासस्य पत्रिकायां श्री. सोमशङ्कर महोदयः लिखितवान्,अहं मम जीवनस्य अन्तपर्यन्तं चन्दमामां पठिष्यामि। नूनं एतयोः विचाराः प्रत्येकं चन्दमामापाठकेन सह युज्यन्ते। मत्स्मृतयः इति पृष्ठस्य प्रकाशनं चन्दमामायाः इतिहासे वाचकानां कृते च अविस्मरणीयमेव।

*- ए.नारायणराव, अनन्तपुरम्, आन्ध्रप्रदेशः*

**च**न्दमामायाः मुखपष्ठं बहु चित्ताकर्षकम्। यद्यापि पृष्ठं न तथा चारुतरं तथापि मुखपष्ठस्य चित्रं नितरां सुन्दरम् आसीत्। पुरातनकथाः पठित्वा वयम् अस्माकं पूर्व-सुवर्णदिनानि स्मृतवन्तः।

*- व्ही.रामचन्द्रः रामजीनगरम्*

**प**र्वदिनानाम् आगमनेन चन्दमामास्मरणं भवति। कतिचन वङ्गदेशीयाः मासिकाः उत्सवनिमित्तं विशेषाङ्कान् प्रकाशयन्ति। तथापि ऑक्टोबर मासस्य सञ्चिका, चन्दमामायाः पूजाविशेषाङ्कः सर्वेषां भारतीयानां मनस्सु उत्सवकाले ऐक्यभावं जनयिष्यति। तस्य आकर्षकं मनोहारि च मुखपृष्ठं अतीव सुन्दरम् आसीत्। अयम् उत्सवः सर्वेषां कृते आनन्दजनकः भवतु , यथानित्यं चन्दमामाकथाः अस्माकं मनांसि आनन्देन पूरयन्तु इत्येव प्रार्थना। भवद्भ्यः सर्वेभ्यः शुभाशयान् दत्त्वा अहं विरमामि।

*- देवाशीषघोषः, आनन्दपुरी, बराकपूर, कोलकता,७००१२*

# मत्स्मृतय: - १

१९५० तमे वर्षे मम विवाहदिनोत्सवसन्दर्भे लण्डनत: मम श्याल: प्रो.शर्मा अस्मद् गृहम् आगतवान्। तदा स: मह्यम् आङ्ग्लोपन्यासेन सह चन्दमामाम् उपहारीकृतवान्।

चन्दमामां पठित्वा प्रीत: अहं, चन्दमामाया: प्राचीनप्रतिकृती: १९४७ त: १९५० पर्यन्तं प्रकाशिता:, मार्गपार्श्वे प्राचीनपुस्तकविक्रेतृभ्य: क्रीतवान्। ता: सर्वा: सम्पाद्य क्रमश: गुच्छरूपेण बद्धवान्। तदारभ्य चन्दमामां पठामि। कतिचन 'आणा' आरभ्य तस्या: मूल्यम् अद्य २० रूप्यकाणि अभवत्। अहं चन्दमामां सानुरागं पुत्रीं मन्ये।

एषा पत्रिका नागिरेड्डि महोदयेन उप्तात् बीजात् अङ्कुरिता; चक्रपाणिमहोदयस्य सेवया, प्रेम्णा, प्रयत्नेन च संवर्धिता। अधुना वटवृक्ष: इव स्वशाखा: आभारतं तथैव विदेशेषु अपि विस्तृतवती। एषा अस्माकं मुख्यमन्त्रिणां प्रधानमन्त्रिणं च आशीर्वादं प्राप्तवती। यदा अहं प्रथमवारं चैन्नैनगरे कोडम्बाकं प्रान्ते चन्दमामाकार्यालयम् अपश्यम्, तदा महदानन्दम् अनुभुतवान्। तेलगु-चलचित्रगायकं घण्टसालमहोदयमपि मिलितवान्। चन्दामामा-कार्यालयस्य पुरत: विजयस्टुडिओमध्ये पूगीवृक्षस्य अध: तमहं मिलितवान्।

Name: B.Rajeswaramurthy
Occupation: Rtd. Sub Registrar, Krishna (Dist)

मम पत्नी अपि चन्दमामां बहु प्रीणाति। मम तृतीयपुत्र: भक्त्या सुन्दरकाण्डपारायणं करोति स्म। तदा एव चद्न्रमामायां सुन्दरकण्डधारावहिकामपि श्रद्धया पठति स्म।

यदि भगवदनुग्रह: भवति अहं मम शततमे वर्षे चन्दमामां पठिष्यामि इति आशासे (मम पिता १०२ वर्षाणि अजीवत्।) चन्दमामा स्वपाठकेभ्य: आह्लादं, ज्ञानम्, विवेकं च जानपद-पौराणिकादिकथाद्वारा सांकेतिकयुगेऽस्मिन्नपि प्रयच्छति। मम अपत्यानि मम पौत्रा: दौहित्राश्च चन्दमामां पठिष्यन्ति मत्त: आरब्धाम् इमां चन्दमामापठनपरम्पराम् आद्रीय नीतिमयं जीवनं यापयिष्यन्ति: इति मम आशा। चन्दमामा आचन्द्रार्कं विराजताम्।

''शुभं भूयात्'' सर्वदा अपि चन्दमामा एका सुन्दरी दिव्या च कन्या इव भासते मह्यम्। आश्चर्यस्य अयं विषय: यत् एतावद्वर्षेभ्य: अस्माकं एतावान् द्रढीयान् सम्बन्ध: वर्तते इति।

# मत्स्मृतय: - २

मम बाल्ये मम माता चन्द्रं प्रदर्श्य मां स्वापयति स्म। यदाहं किञ्चित् ज्येष्ठ: अभवं चन्दमामां स्वहस्तयो: प्राप्तवान्। एष: ''मामा'' प्रीत्यां मम मातुलात् न्यून: न अपि तु अधिक: एव। बाल्ये मम पिता अपि सश्रद्धं चन्दमामां पठति स्म।

मम आश्चर्यम् अजनयत् यत् काचित् कथापत्रिका प्रौढानाम् अपि एतावत्प्रीतिपात्रा भवति इति। अहं पितरं पृष्टवानपि। तदा पिता-''इतरपत्रिकासु केवलं कथा: एव भवन्ति। किन्तु एषा पत्रिका कथाद्वारा मूल्यानि पाठयति अस्मान्। तत् आधुनिकपत्रिकासु दुर्लभम् एव। यदा अस्माकं बुद्धि: किं साधु किम् असाधु इति विवेचयितुम् असमर्था तदा चन्दमामा पठनीया। अवश्यमेव तेन समाधानं लभ्यते'' इति प्रत्युत्तरं दत्तवान्।



Name: Arupratan Aich
Place: Hooghly, West Bengal

तानि वचनानि मह्यम् अरोचन्त। तानि मम हृदये मुद्रितानि अभवन्। तत: परं बहूनि दिनानि मम आप्तमित्रेण (चन्दमामा) सह व्यतीतानि। तेन मम भावना: चिन्तनानि च स्वतन्त्राणि अभवन्।

एकदा मम मित्रस्य पुत्र: चन्दमामां पठन्तं मां दृष्ट्वा अपृच्छत् ''महाभाग, अहं पुस्तकानि तु न इच्छामि। अहं दूरदर्शनं, क्रीडा: च इच्छामि। कथं भवान् अस्मिन् वयसि अपि पुस्तकानि प्रीणाति'' इति।

तदा मया उक्तम् ''यावत्पर्यन्तं भवान् न खादति तावत्पर्यन्तं सुपक्वस्य आहारस्य रुचिं न ज्ञास्यति'' इति।

मम जीवने इदम् अनुवर्तते यत् मम जीवनस्य विभिन्नसङ्घर्षाणाम् अवरोधानां च अतिक्रमणे चन्दमामा सहकरोति। अहं भगवन्तं चन्दमामाया: अमरत्वाय सम्प्रार्थये।



# विक्रमः वेतालः च

## कथा वणिजः रत्नागारस्य

दृढनिश्चयः राजा विक्रमः वृक्षं प्रत्यागच्छत्। सः वृक्षात् प्रेतः अधः आनयत् स्वस्कन्धे चास्थापयत्। नित्यमिव सः श्मशानं प्रति मूकतया गमनमारब्धवान्। तदनन्तरं प्रेते वसन् पिशाचोऽवदत् - "भोः राजन्, त्वमतीव शूरः धैर्यशीलः चासि। परं त्वं तेषां गुणानां दुरुपयोगं करोषि। मध्ये रात्रौ एतावता प्रयासेन किं महत्कार्यं पूर्णतां नेतुमिच्छसि तन्न ज्ञातुं शक्नोमि। परं ममैषा भावना यत् त्वं स्वावमाननं न मन्यसे। तथा त्वया कृतस्य कार्यस्य श्रेयः नष्टं स्यात् यथा रत्नागारः। शृणु तस्य कथां येन त्वं श्रमात् विश्राम्यसि।

अथैकदा नृपः धर्मशीलः करुर-राज्ये शासनं करोति स्म। उशीनगरं तस्य राजधानी आसीत्। यथार्थनामा नृपः धर्मशीलः न्यायी शास्ता आसीत्। सः राजा सत्यप्रियः,



बुद्धिमान्, शूरः चासीत्। तस्य प्रधानमन्त्री सुबुद्धिः तस्मै सुयोग्यः आसीत्। राज्ञः सुयोग्याः निर्णयाः तथा च प्रधानमन्त्रिणः काले उपदेशः तेन राज्ये सर्वत्र सुव्यवस्था आसीत्। सर्वाः प्रजाः सुखसुविधाभिः निवसन्ति स्म।

राज्ये सुप्रसिद्धः सुवर्णकारः आभूषणविक्रेता चासीत्। तस्य नाम रत्नागारः। सः व्यवसाये कोटिमितं धनम् अर्जयति स्म। तस्य पूर्वजैः रक्षिता सम्पत्तिः वित्तं च तस्य व्यवसायवृद्ध्यै साहाय्यमकरुताम्। तेन आरब्धः प्रत्येकं व्यवसायः एवं वृद्धिं गच्छति स्म यथा मिडासस्य स्पर्शः। परन्तु रत्नागारस्य ऐश्वर्यप्राप्तिः तस्य नम्रतायै नाबाधत। सः नित्यमेव विनयशीलः ।सः सर्वेषां सुहृदां निर्धनानां बान्धवानां चाधारः आसीत्।

एकदा राज्ये दीर्घकालं यावत् अनावृष्टिः जाता। सरितः जलरहिताः,वृक्षाः निष्पर्णाः सस्यानि शुष्कानि जातानि। तस्मिन् वर्षे धान्योत्पादनमतीव न्यूनमासीत्। अकालः आपतितः। राज्यस्य धनसञ्चयः धान्यापणेषु रिक्तः कृतः। परं तन्न पर्याप्तम्। राज्यस्य प्रजाः क्षुधार्ताः आसन्। समीपस्थेषु राज्येषु याचितं साहाय्यं कृतिशीलं न जातम्। कुतश्चिदपि मार्गः न दृष्यते स्म।

तस्मिन् समये, रत्नागारः सुदूरेभ्यः राज्येभ्यः धान्यमानाययत्। अत्यल्पमूल्येन सः धान्यविक्रयणमकरोत्। दरिद्रेषु सः बिनामूल्यं धान्यवितरणमकरोत्।

तेन जनाः निरशनात् मुक्ताः जाताः। सर्वे जनाः तेन उपकृताः। ग्रामजनाः बारं बारं तस्य दातृत्वं प्रशंस्य तस्मै आशीर्वादान् यच्छन्ति स्म। रत्नागारस्य सम्मानं स्तुतिं च कर्तुं राज्ञा एका विशिष्टा सभा आहूता।

कानिचन दिनानि अतीतानि। अकस्मात् कश्चन अपरिचितः रोगः राज्ये प्रसृतः। रुग्णानां संख्या प्रतिदिनं बर्धमाना आसीत्।

सर्वेषु चिकित्सालयेषु रुग्णालयेषु च रुग्णानां सम्मर्दः जातः। यावन्तः रुग्णालयाः आसन् तावन्तः रुग्णानां कृते न पर्याप्ताः। अस्मिन् घोरसङ्कटे पुनः रत्नागारः अग्रे आगत्य पित्रा

निर्मितेषु रुग्णालयेषु विशेषज्ञान् चिकित्सकान् आहूतवान्। सः औषधानि आनीतवान् विनामूल्यम् उपचारं च कारितवान्।

केनचित् कालेन सः अपरिचितः रोगः लुप्तः जातः। अस्मिन्नवसरे राज्ञा रत्नागारः न केवलं सम्मानितः अपि तु राज्यस्य केषुचित् महत्तमेषु जनेषु तस्य गणना कृता।

तस्मिन् वर्षे रत्नागारेण विक्रितानाम् आभूषणानां कृते स्वराज्ये परराज्ये च महती अभ्यर्थनासीत्। सः अपूर्वं लाभमाप्नोत्। पितुः सम्मानार्थं राज्ये सर्वत्र ग्रामेषु नगरेषु रत्नागारेण पथिकाश्रमाः निर्मिताः। तत्र प्रत्येकम् अभ्यागतः दिनस्य यस्मिन् कस्मिन्नपि समये भोजनं लभेदिति तेन निश्चिता व्यवस्था कृता। तानि धर्मादाय-स्थानानि सर्वत्र प्रसिद्धानि अभवन्।

रत्नागारस्य लोककल्याणं जनैः स्तुतम्। तस्य वर्धमानां कीर्तिं श्रुत्वा राज्ञा सः राजप्रासादे आहूतः। यदा सः राजसभां प्रविष्टः प्रधानमन्त्री तस्मै आसनम् अयच्छत्। अनन्तरं सोऽपृच्छत्, ''मया श्रुतं यत् त्वं नैकान् पथिकाश्रमान् चालयसि तेन ज्ञायते यत् तव धनप्राप्तिः वृद्धिङ्गता इति। त्वया करः दत्तः वा?''

रत्नागारः नम्रतया आत्मविश्वासेन च उत्तरितवान्,''महाराज, मया धनप्राप्तेः सर्वं विवरणं करविभागाय दत्तमस्ति। सर्वे कराः च तदवधेः पूर्वमेव दत्ताः सन्ति। मम पूर्वजानां सम्पत्तेः प्राप्तितः एव अहं पथिकाश्रमाणां व्यवस्थां पश्यामि।''





"तथापि नूतन-नियमानुसारं त्वया करः दातव्यः भवेत्" प्रधानमन्त्री अवदत्। सः राजकोषप्रमुखं करविभागाधिकारिणं आहूतवान्। सः अधिकारिणं उर्वरितं करमूल्यं गणयितुम् उक्तवान्।

रत्नागारः तत् मूल्यं श्रुत्वा चकितः जातः। "देव, मम प्राप्तेः द्विगुणितं धनं कररूपेण अपेक्षन्ते भवन्तः। यदि मया कररूपेण तावत् धनं दातव्यं भवेत् तर्हि अहं पथिकाश्रमान् चालयितुं न शक्नोमि" रत्नागारः दुःखितस्वरेण उक्तवान्।

"अस्तु। चिन्ता नास्ति। पथिकाश्रमान् अस्मभ्यं यच्छ। वयं पथिकव्यवस्थां द्रष्टुंसमर्थाः। इत:परं वयं व्यवस्थां पश्येम" राजा उक्तवान्।

"देव......" रत्नागारः किमपि वक्तुं प्रायतत। परं नृपः तत् श्रोतुं तत्र न स्थितः ततः निर्गतः एव। रत्नागारः असहायः तत्र स्थितः। प्रधानमन्त्री सुबुद्धिः तस्य स्कन्धे सान्त्वयन् उक्तवान् "चिन्ता मास्तु। तव पितुः नाम्नैव ते अग्रेऽपि चाल्यन्ते।"

निरुपायः भूत्वा रत्नागारः 'अहं पथिकाश्रमाणाम् अधिकारं राज्ञः नाम्नि कृत्वा तत्रत्यमधिकारं त्यजामीति' पत्रे हस्ताङ्कनं कृतवान्। अन्येद्युः राजसभायां राज्ञः परतया एका घोषणा कृता यत् अद्यारभ्य पथिकाश्रमेषु केवलं विकलानां कृते एव भोजनम् उपलभ्यते।

प्रजाजनाः राज्ञः विषये अनुदारमभाषन्त। परं राजा तानि दुर्वचनानि दुर्लक्षितवान्। कश्चन कालः अतीतः।

एकस्मिन् सायङ्काले एकः वृद्धः मनुष्यः प्रार्थयन् राज्ञा प्रधानमन्त्रिणा चामिलत्।

सः वृद्धः मनुष्यः अभाषत ,"देव मम नाम धर्मः। अहं तव राज्यस्य नागरिकः। अहं तव राजसभायाः कर्मचारी अस्मि। सद्यः एव निवृत्तः जातः। यदाहं सेवायामासं तदाहं मम वेतनेन मम पुत्रौ अपालयम्। परम् इदानीम् मम आर्थिकस्थितिः न तावती उत्तमा। मम पुत्राः वा मां पालयितुं समर्थाः स्युः एवमाशास्य अहं तत्र गतः। परं मां पालयितुं तौ असमर्थौः स्तः इति तौ अवदताम्।"

राजा धर्मस्य पुत्रौ आहूयापृच्छत्। तौ अवदतां "देव, आवयोः कुटुम्बं महत् अस्ति। कुटुम्बस्य कृतेऽपि वेतनं पर्याप्तं न भवति। व्ययं सोढुमशक्तौ आवाम् ऋणभारं वहावः। तर्हि कथं वृद्धस्य पितुः भारं स्वीकुर्मः?"

किञ्चित् विचिन्त्य राजा धर्माय रत्नागारेण मिलितुमुपादिशत्। रत्नागारः धर्मस्य वचनं श्रुत्वावदत् "तव पुत्रौ सायङ्काले मां प्रति प्रेषय। अहं ताभ्यां मम कार्यालये एव उद्योगं ददामि। इदानीं तौ यावत् अर्जयतः तस्मात् द्विगुणितं वेतनम् अहं ताभ्यां ददामि यदि तौ त्वां पालयितुं सज्जौ स्तः। द्विगुणितं वेतनवार्तां श्रुत्वा धर्मस्य पुत्रौ आनन्देन अनुमतौ। धर्मः राज्ञा पुनः मिलित्वा धन्यवादान् व्याहृत्य निर्गतः।"

एतां कथां श्रावयित्वा वेतालः नृपं विक्रमम् अपृच्छत्, "भोः राजन्, अहं राज्ञः आचरणविषये शङ्कितोऽस्मि। सः रत्नागारं तस्य लोकसेवार्थं सम्मानितवान्, अस्तौत् च। तदैव सः रत्नागारेण चालितान् पथिकश्रमान् स्वाधिकारेऽकरोत्। किमर्थं सः एवमकरोत्? अनन्तरं पुनः सः धर्मं रत्नागारं प्रति एव किमर्थं प्रेषितवान्? किमर्थं सः बुद्धिमान् नृपः एवं मूढः इवाचरत्? यदि उत्तराणि ज्ञात्वापि त्वं न वदसि तर्हि अहं तव मस्तकं सहस्रशकलेषु विभजे।"



राजा विक्रमः एवमुत्तरमयच्छत् - "तत्र अयोग्यमिति किमपि नास्ति। लोककल्याणं राज्ञः धर्मशीलस्य कृतेऽतीव महत्त्वपूर्णमासीत्। अतः अकाले कृतं साहाय्यं तथा अपरिचित-रोगागमे तेन कृतं साहाय्यं राज्ञा स्तुतम्। परं धर्मशालानां शृङ्खला-निर्माणात् पूर्वं तेन राज्ञा सह मन्त्रयितव्यमासीत्।

यदि विना मूल्यं प्रतिदिनं भोजनं लभते तर्हि को वा कष्टान् कुर्यात्? यदि कृषीवलः कृषिकार्यं करोति तर्हि धान्योत्पादनं भवेत् यदि पटकारः पटं करोति तर्हि वस्त्रोत्पादनं भवेत्। यदि रत्नागारः विनामूल्यं भोजनवितरणं कुर्यात् तर्हि युवाजनैः कार्यं कर्तुं धनार्जनं च कर्तुं किमपि कारणं न लभ्येत।

राज्ये श्रमप्रतिष्ठा नष्टा भवेत्। जनाः विशेषतः युवानः अलसाः भवेयुः। परिणामतः वस्तूत्पादनं न्यूनं भवेत्। राज्यस्य विकासः कल्याणं च स्थगितं स्यात्। युवकाः निरुत्साहिनः भवेयुः। तेषां बुद्धिमत्ता निष्प्रभा भवेत्। राज्यं सुफलं समृद्धं च तदैव भवेत् यदा सर्वे व्यावसायिकाः स्व-स्व-क्षेत्रे उत्कर्षं प्राप्ताः ऐक्येन वसेयुः। केचन स्वबुद्धिम् उपयुञ्जते। केचन शारीरिकं सामर्थ्यं कौशलं वा उपयुञ्जते। यावत्पर्यन्तं नियमभङ्गः न भवति तावत् प्रत्येकस्य स्वतन्त्रं महत्त्वं भवति। राज्ञः एतद् कर्तव्यं यत् सः सर्वान् जनान् स्वतन्त्रतया स्वावलम्बिनः भवितुं उद्योजयति। तदर्थं आवश्यकी शक्तिः आत्मविश्वासः च तेन दातव्यः। एतदेव कारणं येन राजा एवमाचरितवान्। सङ्कटकाले रत्नागारेण कृतं साहाय्यं प्रशंसितं राज्ञा परं सामान्यस्थितौ वृथा अन्नदानं न अनुमतं राज्ञः।अतः पथिकाश्रमान् स्वस्वाधीनान् कृत्वा केवलं विकलाङ्गेभ्यः आन्नदानं तेन अनुवर्तितम्। कर्तव्यपरायणस्य राज्ञः एषः उत्तमः निर्णयः।

धर्मस्य पुत्रयोः विषये राजा स्वयं तयोः वेतनं वर्धयितुम् अक्षमः आसीत्। तेषां कार्यालयाः, तेषां वेतनश्रेणीः तत्र एका काचित् विशिष्टा रचना भवति। रत्नागारः उदारः अस्तीति सः जानाति स्म। अतः सः धर्मम् अत्यन्तम् आत्मीयतया तस्य समीपं प्रेषितवान् तस्य समस्यां परिहृतवान् च।

सः भूपतिः उदारः, न्यायी, बुद्धिमान् चास्ति अत्र न संशयः।''

वेतालः तु मौनभङ्गस्यैव प्रतीक्षायामेवासीत्। यदा राजा विक्रमः स्वमौनम् एवं त्यक्तवान् वेतालः प्रेतेन सह अन्तर्हितः वृक्षं पुनः आरूढवान् च।

*- एन्.एस्.आर्. मूर्थी*





# यात्रा सफलीभूता

एकदा लिङ्गः नाम शिवभक्तः तस्मात् ग्रामात् गच्छन्नासीत्, यत्र पपण्णः वसति स्म। राजप्रासादे पपण्णस्य सत्कारं सः ज्ञातवानासीत्। पपण्णः लिङ्गं स्वगृहम् अतिथिरूपेणाहूतवान्। लिङ्गः पपण्णं न्यवेदयत् यत् सः तुङ्गभद्रानदीतीरे स्थितं तीर्थक्षेत्रं यात्रार्थं गच्छन्नासीत्। सार्वजनिकप्रश्नेषु व्यग्रः पपण्णः 'धार्मिकाचरणानां कृते समयं न लभे' इति असमर्थतां प्राकटयत्।

लिङ्गः टिपण्णीं कृतवान् ''त्वया ईश्वरस्य कृते समयः रक्षणीयः एव। किं त्वं लोकसेवां दैवीकार्यमिति न चिन्तयसि। त्वं यात्रामग्रे मा व्याक्षिप। एकाकी प्रवासः तु न उपदेशार्हः। तव मत्सदृशः कश्चन सहप्रवासी आवश्यकः। तेन त्वं सहकारस्य व्ययविभाजनस्य च लाभमनुभवसि।'' पपण्णस्य साशङ्कताम् अविगणय्य तस्य सदिच्छुकाः आगतस्यावसरस्य लाभं स्वीकर्तुं तं प्रोत्साहितवन्तः। एवं प्रकारेण पपण्णः आवश्यकवस्तूनि सङ्गृह्य लिङ्गेन सह यात्रार्थं प्रस्थितः। परं शीघ्रमेव तेन ज्ञातं यत् कृपणः लिङ्गः कस्मै अपि साहाय्यं न करोति। न तावत्, सः तु भोजनमपि न विभजते। उदारस्वभावः पपण्णः स्वस्य भोजनं धनं च मार्गे मिलितैः दरिद्रजनैः भिक्षुकैः सह च विभजते। वनेषु विचरति सति सः उत्पथेभ्यः श्वभ्यः मर्कटेभ्यः च खाद्यपदार्थानां खण्डान्

के.रोहिणीप्रसाद



क्षिपति स्म। परिणामतः पपण्णः मार्गे सर्वदा अन्नस्य दुर्भिक्षं सहते स्म। अग्रिमः ग्रामः यावन्नागच्छति तावत् वन्यफलानि अन्ये पदार्थाः वा ये मार्गे लभन्ते तान् सः खादति स्म। यात्रायाम् एवम् उदरभरणं कृत्वा सः पुरस्सरदासीत्। एषु प्रसङ्गेषु लिङ्गः पपण्णस्य औदार्ये एव दोषं पश्यति स्म। परं सः स्वभोजनात् किञ्चिदपि तस्मै न यच्छति स्म।

यदा कदापि निरशनात् अशक्तः पपण्णः मन्दं चलति स्म तदा लिङ्गः तं क्रोधेन तर्जयति स्म। ''मार्गे मिलितेभ्यः वनचरेभ्यः अन्नदानं निरर्थकमेव। तथा च तव एतेन व्यवहारेण महान् समयव्ययः अपि भवति। यावत् वयं वेगेन न प्रचलामः तावत् वयमेतम् प्रदीर्घं मार्गं पारं कर्तुं न शक्नुमः'' इति सः वदति स्म।

''त्वं तव साधनसम्पत्तिम् अन्येषु क्षुद्रेषु वितरणात् न विरमसि तेन सर्वदा क्षुधार्तः च तिष्ठसि। एवं स्थिते सति त्वं मामपि बलात् मन्दमेव चालयसि। एवं कृते कथम् अस्माकं यात्रा पूर्णा भवेत्। यदि त्वं दुःखं न मन्यसे तर्हि अहं वेगेनाग्रे गच्छामि'' सः पपण्णमवदत्। ''तव प्रगतिं यदि अहं बिलम्बे तर्हि तत् निश्चयेन अयुक्तं स्यात्। त्वमग्रे भव। अहं मम एतं व्यवहारं प्रचालयन् त्वामनुगच्छामि'' पपण्णः स्वाभाविक-औदार्येण उक्तवान्। लिङ्गः रहसि निःश्वसितवान् वेगेन चाग्रे प्रातिष्ठत।

परं शीघ्रमेव लिङ्गः एकाकिना प्रवासेन त्रस्तोऽभवत्। एकत्र लब्धप्रतिष्ठस्य पपण्णस्य अनुपस्थितिः अन्यत्र निर्धनप्रदेशात् गमनसमये धनधान्याधिक्यात् तेन सीमाशुल्कं दातव्यमभवत्। महामार्गे लुण्ठकाः तस्य सर्वाणि वस्तूनि क्षणार्धे अपाहरन्।

पपण्णस्य प्रकृतिः क्षुत्पिपासया न तावती उत्तमासीत्। एकस्मिन् दिने निर्जने स्थाने ग्रीष्माघातेन पीडितः सः, ततः गच्छद्भ्यां साधुभ्यां च रक्षितः। तौ तं पर्णकुटिम् अनयताम् असेवेतां च। स्वस्थः भूत्वा

पपण्णः निरीक्षितवान् यत् तस्य उपकारकर्तारौ भ्रातरौ विद्येते। तौ स्वतन्त्रं वसतः। अधिकाधिकं समयं तपाचरणे व्ययीकुरुतः। तयोः सर्वाः आवश्यकताः समीपस्थं लघु अरण्यमेव पूरयति।

सप्ताहं यावत् तयोः कुटिरे उषित्वा पपण्णेन लक्षितं यत् तौ द्वौ सुकन्दमिव सर्वत्र वेगेन वर्धमाने कस्मिंश्चित् कन्दे उदरपूर्णं कुरुतः। तस्य पर्णानि अपि खाद्यानि। तेन एतदपि आलक्षितं यत् अपुष्पवृक्षस्य पर्णात् नवाम्बु अधिगन्तुं तौ महाकण्टकिनीम् उपयुञ्जतः। वालुकामये प्रदेशे एते द्वेऽपि वनस्पती नैसर्गिकरीत्या वर्धेते। साधू तयोः जीवनं न्यूनातिन्यूनाभिः आवश्यकताभिः यापयतः स्म। पुनः प्रकृतिस्वास्थ्यं प्राप्य पपण्णः नैकान् धन्यवादान् अयच्छत् पुनरेकवारं सः यात्रामारभत च।

अन्यस्मिन् दिने एव तेन अश्वारूढः राजदूतः मिलितः। सः नान्यः मनुष्यः परं यः पपण्णस्य सत्कारं कर्तुं राज्ञः निमन्त्रणसन्देशम् आनीतवान्। सः अश्वात् अवतीर्य पपण्णाय आदरं प्रकटितवान्। तस्य प्रकृतिं ज्ञात्वा दूतोऽवदत्, ''अहं राज्ञः एकं सन्देशं स्वीकृत्य स्थानिकप्रशासकस्य न्यायालयं गच्छन्नस्मि।भवतः कृते साहाय्यं याचिष्यामि'' इति।



घण्टाभ्यन्तरे एव स्थानिकप्रमुखः आवश्यकवस्तूनि चतुर्भिः वाहकैः सह शिबिकां प्रेषितवान्। राजपुरस्कारं प्राप्तवान् मनुष्यः इति पपण्णः आदरयुक्तं स्वागतं सुखसुविधापूर्णं निवासं च प्राप्तवान्। पपण्णः शासकस्य न्यायालये उपाविशत् प्रसङ्गेन स्वमतं सूचनाः वदन् व्यवहारान् चाशृणोत्। पपण्णेन लक्षितं यत् तस्मिन् क्षेत्रे सः प्रशासकः जलस्य अन्नस्य च न्यूनतां सहते। यत्र दरिद्राणां भरणपोषणमपि कष्टकरं भवदासीत् तत्र करमूल्यस्य का कथा? सद्यः अनुभूतानाम् अनुभवानां सङ्क्षिप्तं विवरणं तेन राजसभायां सादरीकृतम्। ''मया केचन कन्दाः आत्मना सह आनीताः सन्ति। त्वम्

एतान् कन्दान् रोपय वर्धय च येन त्वं तव क्षुधार्ताः प्रजाः भोजयितुं समर्थः स्याः'' सः सर्वं जनसमूहम् उक्तवान्। शुष्कप्रदेशे अल्पमूल्यधान्यस्य संवर्धनसंकल्पना सर्वेषां हृद्गता जाता। प्रशासकस्य कृषितज्ज्ञाः तम् अपरिचितकन्दं रोपितवन्तः। शीघ्रमेव तैः ज्ञातं यत् ते कन्दाः महाकण्टकाः वेगेन विनायासं च वृद्धिं गताः।

पपण्णः प्रशासकस्य सभायां सम्मानितातिथिरूपेण मासं यावत् स्थितः। जनाः तस्य कन्दस्य लाभं स्वीकुर्वन्तः सन्तीति दृष्ट्वा समाहितवान्। 'दुर्भिक्षे तारकः' इति महत्सत्कारं सः प्राप्तवान्। प्रशासकः तस्य तीर्थयात्रां पूर्णां कर्तुं तस्मै यानं, वस्तूनि दासगणं चाकल्पयत्। पपण्णः गन्तव्यस्थानं सुखेन प्राप्नोत्।

पपण्णः तीर्थक्षेत्रे आनन्देन अरमत परं लिङ्गं कुत्रापि नाप्नोत्। मलिनः, त्रस्तः लिङ्गः याचकगणेन सह सप्ताहद्वयानन्तरं तत्रागतः। सः पपण्णाय लुण्ठकानां, महतः दारिद्र्यस्य च अनुभवान् न्यवेदयत्। सः धर्मशीलानां याचकानां गणे सहभागी भूत्वा तैः सह तीर्थक्षेत्रं प्राप्तः। पपण्णस्य स्वानुभवान् ज्ञात्वा साश्रुनयनः लिङ्गः अवोचत्, ''श्रीमन्, ईश्वरदर्शनार्थं तीर्थयात्रागमनस्य अपेक्षया जनसेवां प्रति दिव्यः दृष्टिकोणः अतीव महत्त्वपूर्णः। तव स्वाभाविकी उदारता साहाय्यशीलता च सर्वदा उत्तमं फलं पुरस्कारं च तुभ्यं दत्तवती यस्य त्वम् अधिकारी असि। त्वया न केवलं एकैक-जनस्य अपि तु सम्पूर्णसमाजस्य साहाय्यं कृतम्'' इति। पपण्णः तम् अवदत्।

अनन्तरं लिङ्गः पपण्णेन सह यात्रातः सुखेन प्रत्यागन्तुं शक्तः।






# अमूल्यम्

छात्राः सर्वदा अधीरतया रञ्जकतया पाठयन्त्याः आर्यासरस्वत्याः तासिकायाः प्रतीक्षायां भवन्ति। सा उपकारकाणि उदाहरणानि वदति स्म। तस्मिन् दिने सा सामाजिकशास्त्रस्य पाठं पाठयन्ती आसीत्। बहुषु कुटुम्बेषु पुत्रीपुत्रयोः मध्ये दृश्यमानायाः भेदभावनायाः विषये सा छात्रान् उक्तवती। अनन्तरं सा छात्रान् तस्मिन् विषये अवाचयत्। छात्राः तं पाठम् उत्तमरीत्या अस्मरन् यतः तस्यां चर्चायां ते प्रत्यक्षं सहभागिनः अभवन्। सुमना: श्रिया तथा च गुलाबी तिस्रः सख्यः। तस्मिन् दिने ताः शालातः गृहं प्रत्यागच्छन्त्यः आसन्। सः विषयः तासां मनस्सु इतोऽपि सद्योजातः इव आसीत्।

''त्वं जानासि श्रिये, यदाहं तस्मिन् विषयेऽचिन्तयम्, तदा आर्यासरस्वत्याः वचनानि सत्यमभासन्त। मम पितरौ तथा भेदं कुरुतः'' सुमना: अवदत्।

''मम तथा न भासते। किं पित्रोः विषये अस्माकम् एवंविधं चिन्तनम् अयोग्यमिति न चिन्तयतः?'' अपृच्छत् श्रिया।

गुलाबी तीक्ष्णतया प्रत्यबदत्, ''किमर्थम्? त्वं तव पितुः एकमेव अपत्यमसि। अतः त्वं यदिच्छसि तत्त्वया लभ्यते। परं मम परिवारे मम माता मम भ्रातरि एव अधिकं स्निह्यति।''

''मम परिवारे तीव्रतरः भेदः दृश्यते। अहं पितरं करुणया प्रार्थितवती यदहं गणिते मार्गदर्शनमिच्छामि। परं सः दुर्लक्षितवान्। तस्मिन्नेव समये सः मम अनुजस्य कृते गणितविषयार्थं विशेषमार्गदर्शनमायोजितवान् यतः सः अभियन्ता भवतु इति मम पितुः

पी. व्ही. सत्यनारायणः



इच्छास्ति। किमस्मात् एतत् स्पष्टं न भवति यत् ते मन्निमित्तं व्ययं कर्तुं नेच्छन्ति यतः अहम् पुत्री अस्मि?'' सुमना: अवोचत्।

''पर्याप्तं सुमनः, त्वं सर्वदा मह्यं कथयसि स्म यत् तव अनुजः अतीव बुद्धिमान् अस्ति। तथैव एतदपि अवदः यत् तुभ्यं गणितं न रोचते। किमर्थमिदानीं स्ववचनात् विमुह्यसि?'' श्रिया भेदमकुर्वती अपृच्छत्। सख्योः पित्रोः ममताविषयकः सन्देहः तस्यै नारोचत्।

''यस्मिन् त्वं विश्वससि तत् वक्तुं शक्नोषि। परं यथा अस्माकम् अध्यापिका उक्तवती अस्माकं कुटुम्बेषु कन्याः न गण्यन्ते एव। मम पितरौ अनुजस्य पुस्तकानां कृते शताधिकं रूप्यकाणि व्ययीकुरुतः। परं मम कृते पुस्तकानि क्रेतुं कदापि न चिन्तयतः'' सुमना: अवदत्।

''यदि मया सह ते एवमाचरन्ति तर्हि अहं क्रोधेन रात्रौ भोजनमेव न करोमि। परं तथापि ते मां न गणयन्ति। परं तत्स्थाने यदि मम अग्रजः अस्ति तर्हि मम पितामही सः खादतु अतः पुनः पुनः याचते तं स्वयं भोजयत्यपि'' गुलाबी अब्रवीत्। एवमुक्ते सति तस्याः नेत्रयोः अश्रूणि आगतानि।

''यत्किमपि भवतु श्रिये, त्वं भाग्यवती। त्वं तव पित्रोः एकमेवापत्यमसि। यदिच्छसि तल्लभसे'' गुलाबी अगदत्।

''चिन्तये यत् क्रीडितुं, वक्तुं, कदाचित् कलहं वा कर्तुं यदि अग्रजः अनुजः वाभविष्यत् तर्हि सम्यक् अभविष्यत्'' श्रिया तस्याः प्रामाणिकं मतम् उक्तवती।

''प्रायः अस्माभिः एषः विषयः समापनीयः। प्रतिदिनमिव रोचकं वार्तालापं त्यक्त्वा वयं व्यर्थमेव इमाम् अनावश्यकीं चर्चां कुर्मः। पश्यतम्, वयमस्माकं गृहं प्राप्ताः अपि। अस्तु, श्वः मिलामः'' इति वदन्ती सुमना: गृहं प्राविशत्।

अध्यापिकायाः वचनानि सुमनसः तथा गुलाब्याः मनस्सु गाढं मुद्रितानि आसन्। तस्मादेव कारणात् गृहस्य लघु-लघु-प्रसङ्गान् ते व्यलोकयताम् यान् ते एतावत्पर्यन्तं दुर्लक्षितवत्यौ आस्ताम्।

''पितामहि, त्वं गुलाब्यामेव अधिकं स्निह्यसि। त्वं तस्यै दध्नः मण्डं परिवेषयसि।

यदि त्वम् एवं आचरसि तर्हि अहं नैव भोजनं करोमि'' गुलाब्याः भ्राता आग्रहेण उक्तवान्। पितामही तस्य टीकां श्रुत्वा प्रसन्नतया अहसत्।

''गोपाल, भोजने क्रोधं मा दर्शय। किमहं तुभ्यं तव प्रियं घृतं नैव परिवेषयामि? अहं तस्यै मण्डयुक्तं दधि परिवेषयामि यतः सा घृतस्य स्वादं नेच्छति। पश्य, वयं तु युष्माकं जीवने न भवामः। केवलमेका तव अनुजा। त्वया तया सह प्रेम्णा वर्तितव्यम्। यदि त्वं तां लघुबालिकां पीडयसि तर्हि अहं त्वां ताडयामि। परिवेषितं प्रत्येकं पदार्थं त्वं बुभुक्षितः इव भक्षयसि। परं किं कदापि मां प्रेम्णा पृच्छसि यथा मम प्रिया नप्त्री पृच्छति- पितामहि किं त्वं भोजनं कृतवती?'' पितामही अवदत्।

''आम्, इदानीमवगच्छाम्यहम् यत् त्वं किमर्थं तस्याः विषये एतावती कोमलहृदया भवसि? अस्तु नाम। अहं तव न प्रियः नु?'' गुलाब्याः भ्राता अवदत् दुष्टः इव हसन् ततः पलायत च।

गुलाबी पितामह्याः विशेषां प्रीतिम् अवगम्य शान्ता अभवत्।

ततः सप्ताहानन्तरं तेषां तेलगुभाषाशिक्षकः तान् महाभारतात् एकं पाठं पाठितवान्। सः वर्गच्छात्रान् अकथयत्,''पञ्च अपि पाण्डवाः भोजनार्थम् अधः उपविष्टाः। किं जानीथ यूयं कुन्ती किं कृतवती? सा अन्नस्य समानं भागद्वयं कृतवती। एकं भागं भीमाय दत्तवती। अपरं भागं चतुर्धा विभज्य अन्येभ्यः दत्तवती। ते




समाधानेन अभुञ्जन्। ते अद्यतनीय-बालैः इव मातरं प्रश्नं नाकुर्वन् 'त्वं एवं पक्षपातं किमर्थं करोषीति'। किं युष्मासु कश्चन वदेत् एवं किमर्थमिति?''

छात्राः मिथः मन्दस्वरेण चर्चामकुर्वन्। परं न कोऽपि उत्तरं दातुमुत्थितवान्। गुलाबी उत्तरं दत्तवती। सावदत्, ''आर्य, कियन्त्यपि अपत्यानि भवन्तु पितरौ तैः सह समानतयैवाचरन्ति। तौ जानीथः कः कियद् खादितुं शक्नोति? तथा च कस्मै किं रोचते? तौ तयोः अपत्यानि तेषाम् आवश्यकतानुसारं कल्पयतः न तु भेदं कृत्वा।''

सुमनाः उत्थाय उक्तवती, ''आर्य, कुन्ती जानाति स्म यदि सा सर्वपुत्रेभ्यः समानम्

अदास्यत् तर्हि ते तत्सर्वं पक्तुं न अशक्ष्यन्।''

तयोः उत्तरं सर्वान् छात्रान् तथैव शिक्षकमपि समतोषयत्।

तस्मिन् दिने भोजनसमये सुमनाः साभिमानम् उक्तवती, ''जानीथः युवां, मम पिता मयि कियत् प्रीणाति? सः बहुभ्यः दिनेभ्यः पूर्वमेव चन्दामामा-पुस्तकं क्रीतवानासीत्। मम परीक्षा सन्निहितासीत् अतः सः मत्तः तत् गोपितवान्। सः ह्यः मह्यं तत् अयच्छत् चकितं चाकरोत्। अहं तु अतीव आनन्दिता।''

स्वत्वम् अवगतवती गुलाबी आत्मविश्वासेन अवोचत्, ''अहं सर्वदा एवं चिन्तयामि स्म यत् मम पितरौ मम भ्रातरि अधिकं स्निह्यतः। परं केभ्यश्चित् दिनेभ्यः पूर्वं यदाहं ज्वरेण पीडिता जाता तदा मम मातापितरौ मां बहु रक्षितवन्तौ। तौ जलपानार्थमपि मम शय्यापार्श्वात् न उदतिष्ठताम्। तदा मया अवगतं यद् तयोः विषये मम मतं कियत् अयोग्यमासीत्।''

श्रिया स्मितवदनेन अवदत्, ''अहम् उक्तवती नु यत् पितरौ सर्वेषु अपत्येषु समानं स्निह्यतः। पित्रोः स्नेहः अपत्यानां कृते अतीव अमूल्यः भवति। किम् इदानीं तु मम वाक्ये विश्वसित: ?''

तस्मिन् सायङ्काले आर्यासरस्वती समाधानेन निःश्वस्य श्रियामेवम् उक्तवती, ''श्रिये, भवती यदि न अवदिष्यत् तर्हि अहं कदापि न अज्ञास्यम् यत् मम पाठः युष्माकं लघुबालिकानां मनस्सु एतावत् कोलाहलमजनयत्। मया ज्ञातं यत् यदि अहं तस्य स्पष्टीकरणे प्रयत्नमकरिष्यं तर्हि न तत् तावत् साधु अभविष्यत्। अत एव अहं तव तेलगुशिक्षकस्य साहाय्यं प्रार्थितवती येन मम वचनानि यूयम् उत्तमरीत्या ज्ञातुं शक्नुयात। सः मम प्रार्थनाममन्यत। कुन्तीदेव्याः कथां चाश्रावयत्। किं आसीत् खलु सः योग्यसमये योग्यपाठः ?''

''आम् आर्ये, निश्चयेन तथैवासीत्'' श्रिया समाधानेन अवदत्।





# पञ्चतन्त्रकथा

**एवं** कथां श्रावयित्वा वधूः अग्रे अवोचत्, ''विधिलिखितं कदापि परिवर्तयितुं न शक्यते। यदि अहम् अनेनाहिना सह विवाहं न करिष्ये तर्हि मम पिता शत-पुत्रीणां वधस्य पापभागी भवेत्'' इति। अथ महता उत्साहेन सा सर्पेण सह विवाहं कृतवती पतिसेवायां च श्रद्धाभक्तिपूर्वकं निमग्ना जाता।

अथ कदाचित् सः सर्पः स्वपेटिकातः बहिरागत्य मनोहरं मानवरुपं धृतवान् पर्यङ्के स्वपत्न्याः निकटं च उपविष्टवान्। 'एषः कोऽपि परपुरुषः स्यात्' इति विचिन्त्य सा झटिति पर्यङ्कात् उत्थाय द्वारम् उद्घाट्य बहिर्गन्तुम् उद्युक्ता।

सः मनोहारी पुरुषः उक्तवान्,''कामिनि, अहं तवैव पतिः अस्मि।'' आत्मनः वचसि पत्नी विश्वासं कुर्यात् तदर्थं सः पुनः पेटिकास्थितं निर्जीवसर्पदेहं प्रविष्टवान्। सर्पदेहं प्रविश्य सः जीवति इति तस्यै दर्शयित्वा पुनः निर्जीवदेहात् बहिरागतः।

मम पतिः मनुजरुपं प्राप्तवान् अस्ति इति विज्ञाय वधूः परमान्दिता जाता। तस्य मस्तके विराजमानं मुकुटं शरीरे च राजवस्त्राणि आभूषणानि विलोक्य वधूः तम् अवन्दत।

तयोः द्वयोः शयनात् उत्थिते सति 'मम जामाता मनुष्यः एव अस्ति' इति देवशर्मा अवगतवान्। तेन निर्जीवसर्पदेहम् अग्निना भस्मीसात् कृतम्।

एतां कथां समाप्य बलभद्रः उवाच,''वयमपि अनेन आश्रमेण सह अस्य महानुभावस्य शरीरम् वह्निना भस्मीकुर्मः। तेन

मित्रभेदः-२४



अयम् इत: परं दैवीगुणयुक्ते शरीरे तथैव तिष्ठेत्।''

राज्ञ: अनुमतिना बलभद्रेण आश्रम: ज्वालित:। तत्र स: धूर्त: सन्यासी अपि भस्मीभूत:।

तस्य धूर्तस्य सन्यासिन: कथां श्रावयित्वा करटक: आह ''इयं तव कुमन्त्रणा आपद्दायिनी अस्ति। तं विचारं त्यज'' इति।

तदा दमनक: अवदत्, ''तवेदं वच: निरर्थकम् इति मन्ये। त्वं वृथैव महत् तत्वज्ञानं श्रावयसि। मा चिन्तां कुरु। एष: तु अतीव सरल: विचार:। अस्य वृषभस्य पुष्टं शरीरं मासानां कृते भोजनरूपेण पर्याप्तं स्यात्। तस्य देह: वारं वारं मम दृष्टिपुरत: एव आयाति। किन्तु तस्य चतुरस्य शृगालस्य कथेव यावत् मम एषा कल्पना फलवती न भवति तावत् गोपनीया।

''का सा कथा?'' करकट: दमनकं पृष्टवान् दमनक: कथामारब्धवान् च।

## चतुर: शृगाल:

**ए**कस्मिन् वने वज्रदंष्ट्र: नाम सिंह: निवसति स्म। चमरक: नाम शृगाल: एक: वृक: तथा एक: उष्ट्र: एवं तस्य सिंहस्य त्रय: मन्त्रिण: आसन्।

अथैकदा सिंहस्य केनचित् मदोन्मत्तेन गजेन सह युद्धं जातम्। तस्मिन् युद्धे च सिंह: व्रणित:। तत: आरभ्य स्वगुहाया: बहिरागन्तुमपि तस्य कृते अशक्यं जातम्। स: क्षुधया पिपासया च आकुलित: अभवत्। मृगयार्थं गत्वा कमपि प्राणिनं हन्तुम् असमर्थ: स: स्वमन्त्रिण: आदिष्टवान् यत्, ''युष्माभि: वने अटित्वा मत्कृते पशुं हत्वा अत्र आनेतव्य:'' इति।

किन्तु तस्य मन्त्रिण: अपि मृगयायै गत्वा आहारार्थं पशुम् आनेतुम् अशक्ता:।

तदा चमरक: शृगाल: मनसि अचिन्तयत्, ''यदि एष: उष्ट्र: हन्येत तर्हि बहुकालं यावत् वयं सर्वेऽपि उदरपूर्णम् अन्नं लभामहे। किन्तु उष्ट्र: तु अस्माकं मित्रमस्ति अत: सिंह: तं हन्तुम् अनुमतिं न दद्यात्। अत: मया तथा किमपि करणीयं येन उष्ट्र: स्वयमेव आत्मसमर्पणं कुर्यात्'' इति।

स: उष्ट्रमुक्तवान्, 'रे वयस्य, अस्माकं

स्वामी अन्नाभावात् प्राणत्यागं कुर्यात् इति दृश्यते। यदि सः म्रियेत तर्हि अस्माकमपि मरणं निश्चितम्। अतः तुभ्यं तथा स्वामिने अपि एकं किमपि हितकारकम् उपायं सूचयामि'' इति।

''का सूचना? भवत्सूचनं अनुसरामि। तेन च स्वामिनः साहाय्यं कृत्वा पुण्यं प्राप्नोमि'' इत्युक्तवान् उष्ट्रः।

'रे वयस्य, त्वं स्वशरीरम् ऋणरूपेण शतप्रतिशतवृद्ध्या अस्माकं स्वामिने प्रयच्छ। एवं कृते मृत्योरनन्तरं त्वं द्विगुणितशक्तिसम्पन्नं शरीरम् अग्रिमे जन्मनि अवाप्स्यसि'' शृगालः उष्ट्राय कथितवान्।

''यदि मृत्युदेवता एतद् अनुमन्येत तर्हि ममापि नास्ति कोऽपि निषेधः'' उष्ट्रः अवदत्।

शृगालः शार्दूलं प्रति गत्वा अगदत्,''स्वामिन्, वयं सर्वत्र अटितवन्तः। बहु अन्वेषणं कृते सत्यपि पशुः न लब्धः।''

एतत् श्रुत्वा सिंहः निराशः जातः। तं तथा अवलोक्य शृगालः अवदत्,''किन्तु एकां शुभवार्तां श्रावयितुम् इच्छामि। अस्माकं मित्रं स्वशरीरम् ऋणरूपेण शतप्रतिशतवृद्ध्या दातुं सिद्धः अस्ति। भवान् केवलं मृत्युदेवं प्रार्थयतु यत् सः उष्ट्राय तस्य देहम् ऋणरूपेण शतप्रतिशतवृद्ध्या अग्रिमे जन्मनि प्रत्यर्पयतु।''

सिंहः तद् अनुमतवान्। सः उष्ट्राय धन्यवादान् दत्वा मृत्युदेवं साक्षीकृत्य प्रतिश्रुत्य उष्ट्रम् अहनत्। शृगालेन वृकेण च उष्ट्रस्य शरीरं नखैः विदार्य अत्तुं सिद्धं कृतम्। शृगालस्य इयं कल्पना अन्नरूपेण उष्ट्रस्य शरीरं लब्धुं आसीत्।

सिंहस्य सम्पूर्णं शरीरं रक्तेन लिप्तम् आसीत्। शृगालः अभाषत, ''महाराज, अत्रभवान् नदीं गत्वा स्नातु। तावत् अहं उष्ट्रस्य मृतशरीरं रक्षामि अत्र'' इति। *(अनुवर्तते)*





# ईश्वरस्य महदुपहार:

वत्सस्य गोरसपानं समाप्तम्। स: इतस्तत: सानन्दम् उत्पतितुं प्रारभत। तं बद्ध्वा पितामह: तं सस्नेहं हस्ततलेन अस्पर्शत्। तदैव चन्दु: हरि: सीता, राजु: चिट्टि: तं प्रति अधावन्त तं परित: समायाता: च। ग्रीष्मावकाशकाले ते सर्वे ग्रामम् अभ्यागता: आसन्। पितामहं संस्मारयन् ते सर्वे अवदन्त,''पितामह, भवता प्रतिश्रुतमासीत् यत् 'नूतनामेकां कथाम् अद्य कथयिष्यामि'' इति।

'बाढम्' अवदत् पितामह:''अहं कथां कथयिष्यामि किन्तु मम प्रश्नस्य उत्तरं प्रथमं दातव्यं युष्माभि:'' इति श्मश्रुत: मन्दं विहस्य सकौतुकं प्राह पितामह:।

''अप्येतत् शक्यं कथयितुं युष्माभि: यत् क: सर्वोत्तम: उपहार: युष्माभि: भगवता प्राप्त: अस्ति?'' इति अपृच्छत् पितामह:।

चन्दु: सोत्साहम् अभाषत- ''अहं तथैव सोमबाबु: अग्रस्थानप्राप्तर्थ्यं कक्षायां स्पर्धावहे। स: सर्वास्विव परीक्षासु सर्वोत्तमगुणान् प्राप्नोति। किन्तु गतपरीक्षायां तत्स्थाने मया प्रथमस्थानं प्राप्तम्। एष: एव उत्कृष्ट: उपहार: मया ईश्वरकृपया प्राप्त: इत्यहं मन्ये''।

''समीचिनमेतत् श्रोतुम्। सीते, किं तव कृते उत्तम: उपहार:?'' पितामह: अपृच्छत्।

''पितामह, अनध्यायकाले तात: मां प्रतिवर्षं तिरुमलस्थानं तथैव अन्यधर्मक्षेत्रान् नयति। पाठ्यपुस्तकेषु वर्णितानि, अस्माभि: पुस्तकेषु पठितानि च यानि ऐतिहासिकस्थानानि सन्ति तानि द्रष्टव्यानि इति मम इच्छा आसीत्। अस्मिन् वर्षे जनक: मां तथैव च ममानुजम्

ए. सत्यनारायणमूर्ती

आकरानगरीं दर्शयितुमनयत्। तदपि विनैव अभ्यर्थनाम्। तत्र अस्माभि: ताजप्रासाद: दृष्ट:। अहो भाग्यम्! पितामह एतद् उत्कृष्टम् उपायनम् ईश्वरदत्तम् इति मन्ये'' इत्यवदत् सीता।

चतुर: राजु: अवदत् ''मम सर्वदिनानि पाठशालासिद्ध्यर्थमेव व्यतीतानि। विश्रामकाल: एव महद् प्रीतिदानं भगवद्दत्तम् इति मे मति:।'' तस्य चातुर्येण विस्मित: पितामह: अवदत् ''वैचक्षण्ययुक्तमेतत् उत्तरम्''।

हरि: सगर्वम् अकथयत् ''पितामह, भवत: पृच्छाया: प्रागेव अहं कथयामि- पाठशालायां गानस्पर्धासु बहूनि पारितोषिकाणि मया जितानि। अत: मम मधुरस्वर: एव उत्कृष्टं प्रीतिदानम् ईश्वरेण दत्तम् इति मम मतम्''।

षड्वर्षीया बालिका चिट्टि: तत्रैव कपोलनिहितकरा आसीना आसीत्। ताम् अङ्के निधाय पितामह: अपृच्छत्-''वत्से, कथय किं वर्तते तव मनसि?'' इति।

''जननी'' अवदत् चिट्टि: मधुरस्वरेण। तस्या: उत्तरेण विस्मिता: सर्वे बालका: इषद् सम्भ्रान्ता: अपि यत: तेषु केनापि नैतत् चिन्तितम् यत् अनया बालया उक्तम्।

तस्या: उत्तरेण प्रस्फुरितनेत्र: पितामह: अभाषत ''उत्तमं उत्तमं बाले! युक्तमुक्तं त्वया। माता बालकार्थं नित्यं कल्याणमेव चिन्तयति। किं बहुना अपत्यजन्मात् पूर्वमपि सा अपत्यस्य पादप्रहारान् सहते। यद्यपि प्राप्तयौवनानि



अपत्यानि तां प्रति अनवहितानि भवन्ति तस्या: शब्दान् न गणयन्ति तथापि सा नित्यं तेषां कल्याणमेव चिन्तयति, क्लेशान् सहते। स्वचित्तानुरञ्जनं च स्वानन्दं परित्यज्य स्वापत्यानां सुहास्यवदनानि द्रष्टुं स्पृहयति सा।

मातु: परं किमन्यत् उपायनं भवेद् ईश्वरदत्तम्? अपि ज्ञायते युष्माभि: यत् भगवता माता निर्मिता यत: ईश्वर: न सर्वत्र सततं अस्माभि: सह वर्तति।''

राजु: अवदत्-''अस्मत्कृते माता एव पितरं प्रत्यजानत् यत् विश्रामकाले ग्रामे वयं सर्वे बाला: सावधानेन चेतसा अप्रमत्ता: सन्त: कालं नेष्याम:। न समस्याभि: अभिभूता: भवाम: वा। अत: अनध्यायकाले अस्मान् ग्रामं प्रेषयितुं

तात: मनसि अकरोत् अन्यथा तातेन नैव अनुमता: स्याम् वयम्'' इति।

अपराधिभावं धारयन् हरि: अवदत्-''मम माता सप्ताहे नित्यकार्यव्यग्रा, गृहकार्यमग्ना भवति तथापि अन्नमय्याया: भक्तिगीतानि मामध्यापयितुं सा समयं ददाति। यदा अहं पारितोषिकं प्राप्नोति तदा सा तथा आनन्दिता भवति यथा तयैव जितं तद्। मम जननी एव मम सर्वोत्तमम् उपायनं भगवद्दत्तम्। न उचितं कृतं मया यत् मातु: निर्देशोऽपि न कृत:।

नाहं भयाकुल: भवामि यदा माता मत्समीपे निद्राति। तेनाहं सुरक्षिततामनुभवामि।'' तत: अगदत् चिट्टि:'' न सा मया सह अत्र वर्तते। अत्र न तस्या: सहवासमपि भवति। तस्या: सुदूरत्वं भृशं अनुभवामि। अपि भवान् प्रेषयिष्यामि मां जननीं प्रति?'' इति अपृच्छत् विलपन्ती चिट्टि: । पितामह: अभाषत-''जात, श्व: एव अस्माकं गृहे महती पूजा वर्तते। अत: न केवलं तव अपि तु सर्वेषामेतेषां मातर: अचिरादेव अत्रागमिष्यान्ति।''

''युष्माकं संभाषणं श्रुत्वा अहमधुना मम जननीं स्मारामि। यदा वयं सर्वे बाला: अल्पवया: आस्म तदा यद् किमपि किञ्चित्-अन्नं गृहे भवति स्म माता तत्सर्वम् अस्मभ्यं ददाति स्म। यदा किमपि न अवशिष्टं तस्या: कृते तदा सा कथयति स्म 'नाह बुभुक्षिता' जलमात्रमेव पीत्वा क्षुधां क्षामयति स्म।'' साश्रुनयन: पितामह:अकथयत्।

अधुना विषयान्तरम् आवश्यकम् इति चिन्तियित्वा राजु: अपृच्छत् 'पितामह, अपि भवान् डिम्भप्रवृत्ति: आसीत् बाल्ये वयसि?'' इति। प्रश्नेनानेन आनन्दभवाम् आपद्यत पुन: सम्भाषणे। पितामहोऽपि कौतुकेन स्वशैशवदिनानि अवर्णयत्। तदा पुनरेकवारं सर्वे करताडनेन उच्चै: हास्येन च आनन्दमन्वभवन्त कथाम् आस्वादयन् च।





# कृपणस्य चातुर्यम्

हेल्पौरीग्रामे एक: कृपण: आसीत्। तस्य नाम शिव:। स: यदा भुङ्क्ते तदा हस्तात् अन्नकणपतनेन धान्यव्यय: भविष्यति इति भयेन काकमपि न वारयति स्म। स: व्रीहि-उद्योगेन लक्षाधीश: जात:। तथापि बहु आवश्यकमस्ति चेदेव धनव्ययं करोति स्म स:।

तस्य पिता केशव: आसीत्। स: निरोगी आसीत्। किन्तु तस्य जीवनपद्धति: अनियता आसीत्। परिणामत: वृद्धापकाले स: व्याधिग्रस्त: जात:। दीर्घकालं स: अस्वस्थ: एव आसीत्। बहु-धनव्ययानन्तरमपि स: स्वस्थ: न अभवत्। तेन शिव: अस्वस्थ: जात:। उत्तमोत्तमै: भिषग्वरै: परीक्षितस्य तस्य व्याधिमुक्ते: किमपि चिह्नं नासीत्।

शिव: माधवस्य विषये श्रुतवान्। स: सुगंधपुरीमध्ये वसति स्म। स: स्वपितरं तत्र नीतवान्।

माधव: विविधै: परीक्षणै: तस्य जनकं परीक्षितवान्। किन्तु तस्य उपचारार्थं सोऽपि असमर्थ:। स: अवदत्, ''भो: शिव, कृपया सम्यक् अवगच्छतु। तारुण्ये तव जनकेन स्वास्थ्यरक्षणार्थं यत्न: न कृत:। असावधानतया स: स्वजीवनं नीतवान्। अत: इदानीं तस्य शरीरं नाम 'व्याधीनाम् आलय:' जातम्। ता: व्याधय: तं न मुञ्चन्ति। तासाम् उपशमनं नाम स्वप्नमेव। कस्यापि औषधस्य परिणाम: अत्र न भविष्यति इति मे मतम्।''

के.एन्.व्ही. अञ्जनेयुलु

तथापि शिव: माधवमुक्तवान्–''महोदय, एवं मा कुरु। वैद्यकक्षेत्रे तव कीर्तिं श्रुत्वा अत्र आगतोऽहम्। अत: यत् किमपि भवान् योग्यं मन्यते तत्करोतु। किन्तु मम जनकस्य उपचारं करोतु। अन्यत् सर्वं भगवत: हस्ते एव। भवान् मम पितरं जीवयतु वा न वा अहं भवते सहस्र-रूप्यकाणि दास्यामि।''

अधुना क: उपाय:? माधव: सर्वप्रयत्नै: आमासं केशवमहोदयस्य उपचारान् कृतवान्। वैद्यकशास्त्रस्य विविधानि पुस्तकानि पठित्वा विविधानि औषधानि उपयुक्तवान्। तथापि न यश: प्राप्तं तेन। अन्ततो गत्वा केशववर्य: पञ्चत्वे विलीन: अभवत्।

तस्य अन्त्यविधीन् समाप्य माधव: शिवं मिलितवान्। स: स्वधनार्थं पृष्टवान्। ''किं धनम्?'' शिव: उक्तवान्। ''तव जनकस्य उपचारार्थं दास्यति इति उक्तवान् आसीत् खलु, तत् धनम्।'' माधव: अवदत्।

''महोदय, भवान् मम पितरम् अजीवयत् वा?'' शिव: पृष्टवान्। माधव: दु:खेन अवदत्- ''हा धिक्। न शक्यम् जातम्'' इति। शिव: पुन: पृष्टवान्,''तर्हि मारीतवान् खलु भवान् मम पितरम्?'' माधव: अगदत्-''शान्तं पापम्। शान्तं पापम्। किमर्थम् एवं करोमि? तेन मम को वा लाभ:?''

''महोदय, आवयो: सम्भाषणानुसारं सहस्रं-रुप्यकाणि मया देयानि इति सत्यम्। किन्तु कदा? यदि भवान् मम जनकं जीवयति वा मारयति तर्हि धनं दातव्यम्। नो चेत् न। भवता तु द्वयमपि न कृतम्। नाजीवयत् न वा अमारयत्। किमर्थं मया सहस्रं-रूप्यकाणि देयानि? वदतु इदानीम्'' शिव: पृष्टवान्।

तस्य शाब्दजालेन चकित: माधव: नि:शब्द: स्थित:।





# वचनम्

वसन्तः तस्य अनुजां बबलीं पृष्टवान्, ''प्रिये अनुजे, अहं भवतीं नूतनं खेलं पाठयामि किम्?'' ''आम्, पाठयतु'' बबली उत्सुकतया ग्रीवां दोलायितवती। ''किन्तु यद्यपि भवती खेलनसमये व्रणं प्राप्नोति तथापि भवती पित्रे न कथयतु'' इति वसन्तः उक्तवान्। बबली तां सूचनां पालयितुं सज्जा आसीत् केवलं तस्याः नूतनखेलस्य उत्सुकतायाः कारणात्। ''चलतु, गच्छामः'' बसन्तः उक्तवान्। सः तां गृहस्य पृष्ठतः अङ्गणं नीतवान्। अनुपयुक्तानि पुरातनानि वस्तूनि संगृहितानि आसन्। ''द्विचक्रिका! कस्य अस्ति? अस्माकं तु नास्ति।'' बबली आश्चर्येण पृष्टवती। ''अहं मम मित्रस्य सकाशात् आनीतवान्'' इति बसन्तः अभिमानेन उक्तवान्। बसन्तः द्विचक्रिकाचालनाय स्पृहयति स्म। बहूनि दिनानि यावत् सः पितरं द्विचक्रिकां क्रेतुं याचते स्म। रविवासरे तस्य पिता शाकं क्रेतुं गच्छति स्म। अतः तदानीं द्विचक्रिकां चालयितुं सः इच्छति स्म। अतः सः मित्रस्य सकाशात् द्विचक्रिकाम् पूर्वेद्युः एव आनीतवान्। ''बबलि, त्वं पृष्ठतः आसने उपविश'' इति सः उक्तवान्। बबली संशयेन तं दृष्टवती उक्तवती च, ''भवान् द्विचक्रिकां चालयितुं न शक्नोति। भवान् मां पातयिष्यति। भवता सह अहं द्विचक्रिकायां न उपविशामि'' इति।

''अहं त्वां न पातयिष्यामि। अहं सम्यक् चालयितुं शक्नोमि'' वसन्तः साग्रहं तां पार्श्वस्थ-आसने उपवेशितवान्। बबली भीता आसीत् यत् सा पतिष्यति। किन्तु द्विचक्रिकायाम् उपवेष्टुं तस्याः रुचिः अभवत्। वसन्तः द्विचक्रिकाम्

पी. ऐश्वर्या

अर्धघण्टापर्यन्तं चालितवान्। सहसा पितरम् हस्ते शाकादीनां स्यूतं गृहीत्वा आगच्छन्तं सः दृष्टवान्। भीत्या तस्य द्विचक्रिकायां नियमनं नष्टम्। तेन सः अधः पतितः। बबली अधः पतित्वा पाषाणखण्डात् आघातं प्राप्तवती। तेन तस्याः व्रणः जातः रक्तस्रावः च अभवत्। बबली यत् प्रतिश्रुतवती आसीत् तत् सा विस्मृतवती। सा उच्चैः रोदनं प्रारब्धवती। तस्याः रोदनध्वनिम् आकर्ण्य पितुः अवधानं तां प्रति आकृष्टम् अभवत्। वसन्तः भयभीतः। सः बबलीं त्यक्तवान्। द्विचक्रिकया सह सः ततः पलायनं कृतवान्।

एकघण्टानन्तरं वसन्तः मार्जारवत् गृहं प्रविष्टवान्। गृहे शान्तता आसीत्। ''एतावत्कालपर्यन्तं भवान् भोजनं विस्मृत्य कुतः इदानीम् आगतवान्। अधुना आगच्छ, भोजनं कुरु'' इति माता तम् उक्तवती। तदानीं तस्य पिता गृहे न आसीत्। किन्तु 'भगिनीं सः पातितवान्, द्विचक्रिकां चालितवान् इत्यर्थं पिता क्रुद्धः भवेत्' इति चिन्ता तस्य मनसि आसीत्। किन्तु निशासमये अपि तस्य पिता तं न तर्जितवान्।

अन्येद्युः वसन्तः पाठशालातः गृहम् आगतवान्। तदानीं सः गृहस्य प्राङ्गणे नूतनां द्विचक्रिकां दृष्टवान्। सः अतीव आश्चर्यचकितः। सः किमपि वक्तुं न पारयति। तस्य पिता तम् उक्तवान्, ''वसन्त, आगच्छ, द्विचक्रिकां गृहाण। अहम् एतां तव कृते एव क्रीतवान्। त्वं मित्रात् द्विचक्रिकाम् आनयसि, आरोहणार्थं, चालनार्थं प्रयत्नं करोषि इत्येतत् अहं जानामि स्म। ह्यः भवान् मां सहसा दृष्ट्वा भीतः। त्वं पतितवान्, तेन बबली अपि पतितवती। किन्तु भवान् द्विचक्रिकाचालनं पठितवान् इत्येव मम आनन्दस्य विषयः''। पिता मम हृदयं जानाति इति ज्ञात्वा वसन्तः आनन्दितः अभवत्। सः द्विचक्रिकां स्वीकृत्य स्वमित्रेभ्यः दर्शयितुं धावितः।






# कः भयङ्करः?

कस्मिंश्चिद् काले 'मेहेर' नाम कश्चन सुलतानः शास्ति स्म। स्वस्य तदानींतनी परिस्थितिः तस्य सन्तोषाय नासीत्। मेहेरः अतीव महत्त्वेच्छुः आसीत्। सः स्वस्य राज्यस्य इतोऽपि वृद्धिम् समैच्छत्। अतः तेन सुनिश्चितम् यत्,सीमोल्लङ्घनं कृत्वा राज्यं परितः विद्यमानान् राज्ञः विजित्य तेभ्यः लाभांशम् स्वीकृत्य स एव सम्राट् भविष्यति। कृते एवम् निश्चये स्वस्य राजकीयकोशम् व्ययीकृत्य एकां महतीं चमूं प्रस्थाप्य तेन विजययात्रा आरब्धा।

आक्रमणकर्तुः मेहेरस्य विरोधाय केचन नृपाः सज्जीभूताः किन्तु प्रक्षुब्धस्य जलनिधेः इव आक्रमणम् कुर्वत्याः सैनायाः पुरतः विफलताम् गतः रिपूणाम् पुरुषार्थः। तैः नृपैः युद्धे स्व-असूनि समर्पितानि, ते वीरगतिं च प्राप्ताः। कैश्चित् पार्थिवैः 'मेहेरेण सह विरोधः अयथास्थानम्' इति मत्वा सामोपाचारेण लाभांशः दत्तः। किन्तु अनुदिनम् तस्य राज्यपिपासा वृद्धिं गता। यैः राज्यैः समर्पणम् कृतम् तेभ्यः सम्पत्तिं संगठ्य नूतनाम् सेनाम् विरचय्य तेन नूतनानि आक्रमणानि प्रारब्धानि। स्वसामर्थ्येन ये प्रदेशाः आत्मसमर्पणं कृत्वा जितवन्तः तेषु शीकॉंगूसैनिकैः कस्मिंश्चित् अधिष्ठाने वृक्षे वा स्थित्वा मेहेरस्य अनके सैनिकाः

के. दण्डपाणी



मृत्युपथम् प्रापिताः। ते रात्रावेव पर्वतात् निर्गत्य निद्रावशम् गतेषु मेहेर-सैनिकेषु, पिपीलिकानाम् आवलिरिव सैन्यदलम् प्रविश्य समूहेन तान् अमारयन्।

एतत् दृष्ट्वा मेहेरस्य प्रमुखसेनापतिः स्वराज्ञः समीपम् गत्वा अवदत् "महाराज युद्धमिदम् परित्यज्य वयम् स्वराज्यम् प्रतिष्ठामहे, इत्येव वरम्। मरणात् भीताः सैनिकाः स्वगृहम् गन्तुम् व्याकुलाः। किन्तु मेहेरः स्वमन्त्रिणम् नावमन्यत।

"महोदय भवान् सम्राट् इव जातः, विस्तीर्णस्य साम्राज्यस्य एकमेवाद्वितीयः महीपालः इति घोष्यते। अत्रैव सन्तोषम् मत्वा अस्माभिः स्वदेशः प्रत्यागन्तव्यः। ये राजानः अस्माकम् नियन्त्रणे सन्ति तेषाम् वशीकरणम् एव उत्तमम् भवेत्" सेनापतिः तदेव पौनः पुन्येन अवदत्।

मेहेरः निरदिशत् "शीकाँगूराजा स्ववशे करणीयः एव। एतावतः शक्तिशालिनः राजानः स्ववशे कृताः। एषः पर्वतीयः राजा किमर्थम् न भवेत् मम नियन्त्रणे?" मेहेरः व्याकुलः सन् अपृच्छत्। मेहेरस्य आज्ञाम् को वा न अनुपालयेत्?सुल्तानस्य अवज्ञां कर्तुं कः धार्ष्ट्यं कुर्यात्। कस्यापि विषये अचिन्तयित्वा,योग्यायोग्यम् अविगणय्य महत् धनम् व्ययीकृत्य नूतना सैन्यव्यवस्था कृता। मेहेरः एतत् न अवागच्छत्, 'एतस्य भयङ्करस्य राज्ञः वशीकरणम् नाम वृथा प्रयत्नः। एनं दरिद्रं पर्वतीय राजानं विजित्य किं धनभाण्डारं तेन प्राप्तव्यम् आसीत्? तेन न किमपि सिध्येत्'।

सेनापतिः अपि महत्वाकाङ्क्षी, सः सैन्यस्य पुरतः उदघोषयत्, "यः पर्वतीयं राजानाम् मृतम् वा जीवितम् गृहीत्वा आनेष्यति तस्मै एकसहस्रम् स्वर्णमुद्राः दीयन्ते"।

पर्वतीयः राजा मेहेरस्य अङ्कितः

भवितुम् ऐच्छत्। किन्तु शीकाँगू अचिन्तयत् यत् 'यदि अङ्कितेन भूयते तर्हि मेहेर: तम् अस्थिचर्मावशेषी कुर्यात्। तस्य अपेक्षया युद्धम् कृत्वा मरणम् वरम्'। एतत् निश्चित्य स्वसैन्यम् एकत्रीकृत्य द्वयो: पर्वतयो: मध्ये युद्धम् समारब्धम्। मेहेर: व्यजयत। पर्वतीयराजस्य न एकोऽपि वीर: अजीवत्। यद्यपि युद्धं समाप्तं तथापि क: स: राजा य: अल्पबलेनापि मया सह अयुध्यत इति मेहेरस्य जिज्ञासा। अत: मेहेर: अपृच्छत्, ''पर्वतीय: राज: क्व आस्ते?

मन्त्री अकथयत्, ''महोदय,आहत: स: राजा मृतशरीरेषु विकीर्णेषु कुत्रचित् पतित: भवेत्'' इति। तम् राजानाम् द्रष्टुमिच्छन् मेहेर: युद्धभूमिम् प्राविशत्। युद्धभूमौ सहस्रश: सैनिकानां मृतदेहा: विकीर्णा: आसन्। तद् दृष्ट्वा मेहेरस्य मन: खिन्नम्। तदा एव तत्र सहस्रेषु मृतदेहेषु महाकाय: भयङ्कर: कृष्णवर्ण: मनुष्य: इतस्तत: पश्यन् अतिष्ठत्। तम् अवलोक्य मेहेर: अपृच्छत् ''क: भवान्?'' इति।

''नरभक्षकात् ऋते अन्य: क: भवितुमर्हति? मृतशरीराणि विघट्टयन् खादन् स्यात्,''अमात्य: असूचयत्। वस्तुत:



सेनापते: ज्ञानम् योग्यमासीत् आफ्रिका-अरण्येषु नरमांसम् भक्षयन्त: अनेके जना: भवन्ति। नूनं स: नरभक्षक: एव आसीत्।

मेहेर: नरमांसभक्षकमपृच्छत् ''त्वया भृशम् नरमांसम् लब्धम् इदानीमत्र। तर्हि अधुना इतस्तत: किं पश्यसि? यस्मै मृतदेहाय स्पृहयसि तं देहं यथेष्टं नय'' इति।

नरभक्षक: अकथयत्, ''अहं मम क्षुधाशान्तये कमपि मृतदेहं खादितुं कामये। परन्तु मया एते न मारिता:। अत: न विद्यते मम कोऽपि अधिकार: एतान् खादितुम् अनुज्ञां विना। एतान् जीवान् कोऽपि

अमारयत्। अहम् तु एकमेव मृतदेहम् कामये। किन्तु मारयितुः अनुज्ञाम् विना कथमहम् अश्नामि तत् मांसम्? अतः प्रतीक्षे मारयितारम्''। मेहेरः प्रत्यवदत्, 'एतान् सर्वान् अहमेव अमारयम् किन्तु न अशनाय''। कृष्णवर्णः सः साश्चर्यम् अपृच्छत्, ''यदि भक्षयितुम् न इच्छति तर्हि एतावतां जनानाम् वधः किमर्थम्''?

मेहेरः सेनापतिम् अवदत्, ''एषः मनुष्यः अरण्यवासी, न किमपि अवगन्तुम् शक्नुयात्''। ततः मेहेरस्य पृष्ठतः तेन कोऽपि हास्यध्वनिः श्रुतः। मेहेर पृष्ठतः अवनमय्य अपश्यत्, तत्र अटवीवासी कश्चन कापालिकः आसीत्।

मेहेरः अपृच्छत्, ''हे महात्मन् किमर्थम् एवम् हस्यते''? ''मेहेरराज, नरभक्षकं भयङ्करम् मत्वा तम् तिरस्करोषि किन्तु सः तु स्वबुभुक्षायै नरदेहं हन्ति, न विनाकारणम्। वृथैव न कस्यचित् जीवितमपहरति। त्वम् तु सम्राट् भवितुम् वाञ्छन् रणवाद्यानि संवाद्य लक्ष-जनानाम् प्राणान् एवमेव हरसि। स्वस्य महत्त्वाकाङ्क्षायाः पूर्तये निर्दयतया लक्षशः जनान् मारयसि। अधुना सम्यक् विमृश्यैव वद, उभयोः युवयोः कः भयङ्करः? त्वं उत सः नरभक्षकः?'' इति।

कापालिकस्य वचनानि वज्र इव मेहेरस्य चेतः अदहन्। लज्जित् मेहेरः ज्ञातव्यम् ज्ञातवान्।

तदा आरभ्यैव सः स्वात्मनि परिवर्तनम् अकारयत् निश्चयमकरोत् च 'इतः परं विना हेतुम् न योत्स्ये' इति।





# असत्यस्य मूल्यम्

गोविन्दः यदा चतुर्दशवर्षीयः बालकः आसीत् तदा तस्य मातापितरौ नौकादुर्घटनायां दिवं गतौ।

तस्मिन् ग्रामे कृष्णः नाम कस्यचित् वणिजः स्वस्य आपणम् आसीत्। सः गोविन्दस्य पालनं कृतवान्। सः गोविन्दाय तस्य आपणे उद्योगं दत्तवान्। अपि च स्वस्य गृहे तस्य निवासव्यवस्थां कृतवान्। सः तस्मै भोजनादिकं ददाति स्म। प्रतिमासं सः तस्य कृते आपणे कृतस्य कार्यस्य वेतनमपि ददाति स्म। किन्तु तत् धनं सः तस्य हस्ते न समर्पयति। सः तस्य कृते वित्तकोषे धनस्य सङ्ग्रहणं करोति स्म। 'यदा गोविन्दः युवा भविष्यति यदा च तस्य विवाहः भविष्यति तदा सः वित्तकोषे सङ्गृहितस्य धनस्य उपयोगं कर्तुं शक्नुयात्' इति कृष्णः चिन्तयति स्म।

कृष्णः गोविन्दस्य कुटुम्बजनः इव तस्य चिन्तां वहति स्म। कृष्णस्य अपत्यं नासीत्। गोविन्दाय एतेन एव कारणेन सः स्पृहयति स्म। गोविन्दः प्रामाणिकः उद्योगशीलः च आसीत्। कृष्णस्य तस्मिन् विश्वासः आसीत्। अतः कदाचित् आपणस्य कार्याणां दायित्वं गोविन्दस्य स्कन्धे स्थापयित्वा स्वयम् अन्यकार्याणां पूर्तये आपणतः बहिः गच्छति स्म।

एवं गच्छति काले एकदा आपणे धनसंग्रहतः पञ्चविंशतिरूप्यकाणि नष्टानि जातानि। कृष्णः तस्मिन् दिने आपणे एव आसीत्। गोविन्दः तस्य साहाय्यं करोति स्म। कृष्णः केवलं भोजनार्थम् एकवारम् एव आपणतः बहिः गतवान् आसीत्। सायङ्काले यदा आपणस्य पिधानम्

**तिरुमलाश्री**



आपणम् आगतवान्। सः गोविन्दम् उत्साहेन उक्तवान्, ''प्रिय सखे, गोविन्द, भवान् गतमासे लॉटरीचिटिकां क्रीतवान् तस्य पारितोषिकं भवान् प्राप्तवान् अस्ति'' इति। आनन्दितः गोविन्दः उक्तवान्, ''अहं द्रष्टुम् इच्छामि'' इति उक्त्वा सः तस्य सख्युः हस्ततः दैनिकम् आकृष्टवान् पठितवान् च । गोविन्दः पारितोषिकरूपेण पञ्चविंशतिसहस्रं रूप्यकाणि जितवान् आसीत्।

कृष्णः आश्चर्यचकितः अभवत्। सः पृष्टवान्, ''गोविन्द, भवान् कदा लॉटरीचिटिकां क्रीतवान् माम् अनुक्त्वा? भवान् लॉटरीचिटिकां क्रेतुं धनं कुतः प्राप्तवान्?''

गोविन्दः प्रत्युत्तरं दत्तवान्,''महोदय, तस्मिन् दिने भवान् मां पृष्टवान् यत् अहं पञ्चविंशतिः रूप्यकाणि स्वीकृतवान् किम्? तदानीं अहं न स्वीकृतवान् इति भवते कथितवान्। किन्तु वस्तुतः अहमेव तद् धनं लॉटरीचिटिकां क्रेतुं स्वीकृतवान् आसम्।''

कृष्णः गोविन्दं दृष्टवान् यतः गोविन्दस्य वाक्ये तस्य विश्वासः न अभवत्। गोविन्दः पुनः उक्तवान्,''मम मित्राणि लॉटरीचिटिकां क्रीणन्ति स्म। अहमपि मम भाग्यं परीक्षितुम् इष्टवान्। किन्तु भवते सत्यं कथयितुम् अहं भीतः। कृपया क्षन्तव्यः अहम्'' इति उक्त्वा गोविन्दः लज्जया अधोमुखः स्थितः।

कृष्णः अतीव आनन्दितः यतः गोविन्दः

अभवत् तदा कृष्णः सङ्गृहितं धनम् अगणयत्। पञ्चविंशतिरूप्यकाणि न्यूनानि इति सः तदानीं ज्ञातवान्। सः प्रयत्नेन स्मृत्वा अपि तेषां रूप्यकाणां किं जातम् इति ज्ञातुं न शक्तवान्।

सः गोविन्दम् आहूतवान्। ''भवान् धनं कस्मैचित् कार्यार्थं स्वीकृतवान् किम्?'' इति सः गोविन्दं पृष्टवान्। किन्तु गोविन्दः उक्तवान्,''महोदय, अद्य तु अहं धनसङ्ग्रहं नैव स्पृष्टवान्।'' कृष्णः गोविन्दस्य वचने विश्वासं कृतवान्। तस्मात् पूर्वं सः कदापि असत्यं न उक्तवान्। 'अहं तस्य धनस्य कथं व्ययं कृतवान्' इत्येव कृष्णः चिन्तयन् आसीत्।

एकः मासः अतीतः। कृष्णः गोविन्दः च आपणे आस्ताम्। गोविन्दस्य सखा शिवः

पञ्चविंशतिसहस्रं रूप्यकाणि प्राप्तवान्। सः मिष्टान्नानां वितरणम् अकरोत्।

यदा गोविन्दः धनं प्राप्तवान् तदा कृष्णः गोविन्दाय धनं वित्तकोषे स्थापयितुं कथितवान्। व्यर्थं धनस्य व्ययः मास्तु इति उपदेशं कृतवान्। सः कथितवान् यत् 'लॉटरीचिटिका-क्रयणं द्यूतम् इव अस्ति। अतः भविष्ये पुनः लॉटरीचिटिका-क्रयणं मास्तु'।

दिनद्वयानन्तरं कृष्णः गोविन्दाय वित्तकोषस्य पुस्तकं दत्तवान्। सः गोविन्दाय 'तस्य एतावत् पर्यन्तस्य वेतनं वित्तकोषे अस्ति' इति कथितवान्।

पुनः सः गोविन्दम् उक्तवान्, ''भवान् इतः परम् आपणे कार्यं कर्तुं मा आगच्छतु। भवान् मम गृहतः निर्गच्छतु, स्वयम् आजीविकां कर्तुं प्रारम्भं करोतु'' इति।

गोविन्दः भयचकितः। सः कृष्णस्य पादयोः अपतत्। सः याचनां कृतवान्, कृपया मां क्षम्यताम्। अहम् अपराधं कृतवान्। अहं परिणामस्य विचारं न कृतवान्। अहं पुनः एवं प्रमादं कदापि न करिष्यामि। अहं कदापि असत्यं न वदिष्यामि। कृपया भवता सह निवस्तुं माम् अनुमन्यताम्''।

कृष्णः तम् उत्थापितवान्। सः उक्तवान्, ''गोविन्द, भवान् माम् अनुक्त्वा धनं स्वीकृतवान्। माम् असत्यम् उक्तवान् इत्यतः अहं क्रुद्धः नास्मि। भवान् गच्छतु इति अहम् एतेन एव कारणेन वदन् अस्मि यत् पूर्वम् इव अधुना अहं भवति विश्वासं कर्तुं न शक्नोमि। अहम् अधुना चिन्तयिष्यामि यत् भवान् असत्यं वदन् अस्ति वा यद्यपि भवान् सत्यमेव वदन् स्यात्। एतादृशः संशयः मम च भवतः च कृते न योग्यः''।

गोविन्दः ततः निर्गतवान् यतो हि तस्य कृते अन्यः पर्यायः एव न आसीत्। 'अहं मम असत्यकथनस्य बहुमूल्यं दत्तवान्' इति चिन्तयन् सः निर्गतः।





# चतुरा वृद्धा

**धा**रानगर्या: राजाभोजस्य आश्रये माघ: नाम कश्चित् कवि: आसीत्। कदाचित् सायङ्काले तौ द्वौ अपि भ्रमणार्थं प्रस्थितौ। कवितानिमग्नौ तौ बहु दूरं गतवन्तौ। ताभ्यां कियान् काल: अतीत: इति न ज्ञातमेव। सर्वत्र अन्धकार: प्रसृत:। यदा तौ प्रत्यागन्तुम् इष्टवन्तौ तदा ताभ्यां मार्ग: नैव दृष्ट:। बहुप्रयासै: अपि न लब्ध: ताभ्यां मार्ग:।

कमपि पृष्ट्वा मार्गान्वेषणं करणीयम् इति विचिन्त्य तौ समीपस्थां कुटीं प्रविष्टवन्तौ। तत्र काचित् वृद्धा दीना स्त्री उपविष्टा आसीत्।

भोजराज: तां वृद्धाम् अपृच्छत्–''अम्ब, एष: मार्ग: कुत्र गच्छति?''

'एष: मार्ग: कुत्र गच्छति' इति मार्गस्था: एव जानीयु:। कथं मार्ग: जानीयात्? पुत्र, क: त्वम्?'' इति सा अपृच्छत्।

'आवां यात्रिणौ' इति विहस्य माघेन उत्तरितम्।

'अस्यां सृष्ट्यां केवलं चन्द्र: सूर्य: च यात्रिणौ। किं युवां चन्द्रसूर्यौ स्थ:?' इति वृद्धा अपृच्छत्।

''आवां क्षणिकौ अतिथी'' माघ: पुन: उदतरत्।

''मेघ: यौवनं च द्वौ एव क्षणिकौ अतिथी। युवां तौ तु न दृश्येताम्'' इति सम्यक् निरीक्ष्य तया उक्तम्।

''आवां राज्यपालकौ'' इति राजाभोज: अकथयत्।

''इन्द्र: यम: च द्वौ एव पालकौ स्त:।

डी. दशरथ रामैय्या

युवां तु तौ न स्थ:'' इति वृद्धा राजानं दृष्ट्वा अभाषत।

''परन्तु आवां सहनशालिनौ अपि स्व:।'' भोज: अवदत्।

''भूमि: स्त्री च केवलं सहनशालिन्यौ'' वृद्धा अवदत्।

''आवां वीतरागिणौ'' माघ: अवदत्।

''वीतरागी इति वक्तुं केवलं शनि: संतृप्ति: च योग्यौ स्त:'' वृद्धा अकथयत्।

''आवां वैदेशिकौ'' भोजराज: अवदत्।

''जीवात्मा वृक्षजलं चैव वैदेशिकौ'' वृद्धा अवदत्।

''आवां दीनौ'' माघ: अवदत्।

''अजापुत्र: बालिका च केवलं दीनौ'' वृद्धा अकथयत्।

''आवां समर्थौ'' भोजराज: अवदत्।

''सामर्थ्ययुक्ते तु केवलं भोजनं जलं च'' वृद्धा अवदत्।

''अम्ब, आवां पराजितौ'' माघ: अवदत्। अन्ततो स: वृद्धां पराजेतुं न शक्तवान्।

''ऋणिकं बालिकापितरं च विहाय किं कोऽपि पराजित: भवति? पुत्र, परं युवां कौ? न उक्तं किं वाञ्छत: इति? यदि कथयत: तर्हि मत्परतया यत् शक्यं भवेत् तत् करिष्यामि।'' इति प्रेम्णा अवदत् वृद्धा।

माघ: स्वपाण्डित्यम् अपसार्य अवदत्- ''अम्ब अयं भोजराज:। अहं च माघ:। राजधानीं प्रति गन्तुं मार्गप्राप्तौ आवयो: दुरवस्था जाता अस्ति।

''किमर्थम् एतत् पूर्वमेव न उक्तम्? साक्षात् तेन मार्गेण गच्छत: चेत् राजधानीं प्राप्स्यत:'' वृद्धा अकथयत्।

वृद्धया सूचितेन मार्गेण गच्छन्तौ तौ राजधानीं प्राप्तवन्तौ। राजप्रासादं प्राप्य महाराज: भोज: तस्यै वृद्धायै महापारितोषिकं प्रेषितवान्।





# तानसेनः

अकबरमहाराजस्य राजसभायां 'तानसेनः' गायकः आसीत्। तानसेनस्य कीर्तिः दूरपर्यन्तं प्रसृता आसीत्। अकबरमहाराजस्य राजसभायां 'वीरबलः' नाम एकः विद्वान् अपि आसीत्। सः अकबरस्य कृते प्राणेभ्यः अपि प्रियः आसीत्।

एकस्मिन् अवसरे बीरबलः महाराजं प्रति गत्वा अवदत्, ''महाराज, एवं कथ्यते यत् दीपकरागः अतीव सुन्दरः अस्ति। तम् एकवारं श्रोतुम् इच्छामि'' इति।

महाराजः अवदत् , ''एवं वा! तर्हि अद्य एव शृणोतु। तदा अकबरः तत्क्षणं तानसेनम् आहूतवान् तं गातुम् आज्ञापितवान् च। दीपकरागस्य गायनेन गायकस्य शरीरे उष्णता निर्मिता भवति, शरीरं ज्वलति एव। अतः तस्मिन् काले सङ्गीततज्ञाः दीपकरागं कस्यापि पुरतः न गायन्ति स्म। किन्तु किं करणीयम्? इच्छा भवतु अथवा न तानसेनेन महाराजस्य आज्ञायाः पालनं करणीयम् एव भवति। अतः किमपि अन्यविचारम् अकृत्वा तानसेनः दीपकरागं गातुम् आरभत।

आलापनं तु कृतं किन्तु तानसेनः अचिन्तयत् यत् तस्य हृदये कापि ज्वाला प्रज्ज्वलिता। यः प्रमादः तेन कृतः तस्य कृते सः अनुतप्तः आसीत्। तेन सः अतीव अस्वस्थः अपि जातः। एतस्याम् अवस्थायां

एस्.जे. रावः

तानसेनः अकबरमहाराजस्य अनुमतिं गृहीत्वा साबरमतीनद्याः तीरम् आगतवान्।

तेषु दिनेषु मुघलः गुजरातराज्यम् आक्रमितुं सदैव सिद्धः भवति स्म। तेभ्यः भीताः नार्यः उषसि एव नदीं गत्वा जलम् आनयन्ति स्म।

एतस्मिन् ग्रामे भगिनीद्वयं जलम् आनेतुं नदीम् अगच्छत्। तयोः अग्रजायाः नाम आसीत् 'तानी' तथा च अनुजायाः नाम आसीत् 'नानी'। एकस्मिन् दिने ते नद्याः तीरे उपविशन्तं तानसेनम् अपश्यताम्।

तं दृष्ट्वा एव तयोः मुखात् अस्फुरत्, ''चिन्तयामि यत् कः अपि दीपकरागं गीत्वा पीडां सहन् अस्ति'' इति।

एतद् श्रुत्वा तानसेनः चकितः अभवत्। झटिति एव सः ताभ्यां स्वस्य कथाम् अश्रावयत्। प्रथमतः तं दृष्ट्वा ते भीते अभवताम्। किन्तु, ''अये भगिनि, एवं तेन आहूते ते तस्य कथां श्रुत्वा तानसेने विश्वासम् अकुरुताम्''।

ते द्वे वस्तुतः गानकलाप्रवीणे शिक्षितसङ्गीतशास्त्रे आस्ताम् ।ते तानसेनं स्वगृहम् अनयताम्। किञ्चित् कालं विश्रम्य तानी मेघमल्हाररागं गातुम् आरभत। न केवलम् एकवारं किन्तु सा नैकवारं तं रागम्



अगायत्। यतः मेघमल्हाररागस्य परिणामः दीपरागस्य परिणामस्य विपरितः अस्ति। किञ्चित् कालानन्तरं तस्य मनः शान्तम् अजायत। तस्य हृदयपीडा न्यूना अभवत्। यदा तानसेनः पूर्णतया स्वस्थः अभवत् तदा रहस्यमिमं गोपयितुं तानीनानीभ्यां तानसेनः वचनबद्धः कृतः राजप्रासादं प्रेषितः च।

तानसेनं पूर्णतया स्वस्थं दृष्ट्वा महाराजः सन्तुष्टः अभवत्। सः कथं स्वस्थः अभवत् एतद् महाराजः पूर्वमेव राजसभास्थानाम् अन्यपण्डितानां माध्यमेन अजानीत। तदा तस्य मनसि मेघमल्हाररागं श्रोतुम् इच्छा उत्पन्ना अभवत्।



तदा महाराजः तानसेनं मेघमल्हाररागं गातुम् आदिशत्। 'अहं तं रागं न जानामि' इति तनसेनेन शतवारं कथिते सत्यपि महाराजः न अमन्यत। अन्ते मृत्युभयेन तेन भगिनीद्वयोः रहस्यं कथितम्।

तदा महाराजः तानसेनं साबरमतीनदीतीरम् आग्रहेण अनयत्। प्रतिदिनमेव तानीनान्यौ अपि नदीतीरम् अगच्छताम्। तदा ते तानसेनस्य समीपं स्थितं महाराजम् अभिज्ञातवत्यौ।

महाराजः ते प्रति गत्वा प्रार्थनां कृतवान् यद् ''भवत्योः अद्भुतगानसामर्थ्यविषये अत्यादरेण श्रुतं मया तानसेनतः। किम् भवत्यौ मह्यम् एकवारमपि मेघमल्हाररागं न श्रावयेताम् वा?'' भगिनीद्वयं महाराजस्य प्रार्थनां निराकर्तुम् नाशक्नोत्।

सुनिश्चिते दिने विशेषतया सुशोभितायां राजसभायां निश्चिते समये ताभ्यां भगिनीभ्यां मेघमल्हाररागस्य गायनम् आरब्धम्। महाराजः गायनं श्रुत्वा अतीव सन्तुष्टः जातः। कयापि प्रार्थनया विना सः तयोः द्वयोः पतिभ्याम् प्रभूतं धनं भूभागं च उपहारीकृतवान्। तानीनान्यौ न केवलं सङ्गीतविद्याप्रवीणे किन्तु महापतिव्रते अपि आस्ताम्। यतः महाराजस्य आज्ञायाः निराकरणं तयोः कृते अशक्यम्, अतः ते राजसभायाम् अगायताम्। ते अमन्येताम् यद् एवं सभासु गायनं विवाहितानां नारीणां कृते अशोभनीयम्। अतः सभागमनात् पूर्वमेव ताभ्याम् आवश्यकी सिद्धता कृता।

सभा समाप्ता अभवत्। महाराजेन प्रशंसाकरणं तथा च पारितोषिकवितरणमपि समाप्तम्। तदा ते आनीताभ्यां छुरिकाभ्यां परस्परम् अमारयतां भूमौ च अपतताम्। पतिव्रताभ्यां ताभ्यां कृतं प्राणत्यागं दृष्ट्वा तानसेनः मूर्छितः जातः।

तयोः प्राणत्यागस्य दुःखपूर्णा वार्ता वायुवेगेनग्रामे सर्वत्र प्रसृता। अनन्तरं तान्याः नान्याः च भर्तारौ तत्र आगच्छताम्। तयोः

पुरतः राजा लज्जया अधोमुखः स्थितः। सः अनुतप्तः आसीत् यतः तस्य अविचारप्रस्तावं भगिनीद्वयं स्वप्राणान् अत्यजत्।

सभागमनात् पूर्वं भगिन्यौ स्वस्य पत्युः नाम्ना पत्रम् अलिखताम्। तद् एवम् आसीत्-

'प्राणनाथ! मुघलराजस्य आज्ञायाः पालनं कुर्वत्यौ आवां सभायां गायावः। एवं सभायां गायनम् आवयोः पतिव्रताधर्मे कलङ्कं स्यात् इति आवां मन्यावहे। अतः अत्र स्वप्राणत्यागम् एव उचितं मत्वा प्राणान् त्यजावः। परन्तु दिवि पुनर्मिलामः। धन्यवादः.......'

मेघमल्हाररागं गीत्वा भगिनीद्वयेन तानसेनः मृत्युमुखात् उद्धृतः आसीत्। तस्य वचनरक्षणस्य असमर्थता एव तयोः मृत्योः कारणम् आसीत्। अतः 'तान्याः नान्याः च मृत्योः कारणम् अहमेव अस्मि' एवं विचिन्त्य तानसेनः अतीव दुःखितः जातः। सः अचिन्तयत् यत् केन कारणेन तयोः नाम अमरं भवेत्? इति।

अतः एव गायने यत्र यत्र 'ओ'कारः उपयुक्तः अस्ति, तत्र तत्र तानसेनः तोम् ताना, नाना.... गायति स्म। सा रीतिः 'तराणा' इति नाम्ना अद्यापि सङ्गीतशास्त्रे प्रचलिता अस्ति। एवं तानसेनेन द्वाभ्यां भगिनीभ्याम् अमरता दत्ता। ते सङ्गीतकलायाः अङ्गम् अभवताम्। केवलम् एतावता नालं तानसेनः यत्र ताभ्यां भगिनीभ्याम् प्रथमम् अमिलत् तत्र तयोः स्मृतिरुपेण तेन एकं मन्दिरं निर्मितम्। तस्य अवशेषाः अद्यापि अहमदाबादनगरे अलीसपुलस्य समीपं सन्ति। धन्ये तानीनान्यौ, धन्या च सङ्गीतकला!






# वनेचरस्य साहसम्

एकदा शिवपार्वत्यौ काशीनगर्याः आकाशमार्गेण भ्रमणं कर्तुम् आरभताम्। तत्र काश्यां सहस्राधिकनरनार्यः गङ्गास्नानं कुर्वाणाः आसन्, केचन च भगवतः विश्वेश्वरस्य दर्शनं कुर्वन्तः आसन्। केचन ईश्वराय समर्पणं कुर्वन्तः केचन भजमानाः च आसन्।

इदं सर्वम् अवलोकयन्ती पार्वती स्वामिनम् अपृच्छत्- ''हे स्वामिन्! प्रतिदिनं भवन्तं ध्यातुम् एतावन्तः जनाः काशीनगरीम् आगच्छन्ति किमेते सर्वेऽपि भवन्तम् उपागन्तुमर्हन्ति? यदि एते सर्वेऽपि कैलासमागच्छन्ति तर्हि किं कैलासस्थले एभ्यः पर्याप्तं स्थानं कल्प्यते उत न?''

अस्मिन् श्रुते सति शङ्करोऽवदत्-'कियती वराकी मूढा असि त्वम्। यः कोऽपि काशीमागच्छति किं सः कैलासमपि प्राप्तुं शक्नोति इति तव आशयः वा? पुण्यक्षेत्राणां दर्शनम् अकुर्वाणा अपि जनाः मत्समीपम् आगन्तुम् अर्हन्ति। माम् उपागन्तुम् केषाम् पात्रता अस्ति, इदमहं साक्षात् दर्शयिष्यामि।''

पार्वतीपरमेश्वरौ वृद्धदम्पत्योः रूपं धृत्वा विश्वेश्वरमन्दिरसमीपं गतवन्तौ। तत्र एकस्य न्यग्रोधवृक्षस्य अधः उपविष्टौ। भगवान् शिवः वृद्धावस्थायाः कष्टान् सहमानः मरणासन्नः इव क्रन्दन् स्थितः।

विश्वेश्वरदर्शनाय भिन्नस्थलेभ्यः श्रद्धालवः जनाः आगच्छन्तः आसन्। तेषु कतिपयैः भाविकैः तौ वृद्धदम्पती न दृष्टौ एव। केचन दृष्टवन्तः परं दृष्ट्वाऽपि अदृष्टम् इव अग्रे अचलन्।

व्ही. मार्कण्डेय राव

तावति काले एको यात्री अगच्छत्। तं पश्यन्ती सा वृद्धा प्रार्थयमाना अवोचत्- "भद्र! अयं मम पतिः मरणासन्नः। किञ्चिज्जलं पाययित्वा पुण्यं लभस्व, अनुगृहीता भवेयम् अहम्" इति।

एतच्छ्रुत्वा क्रुध्यन् सः यात्री अवदत्- "यत्र कुत्रापि इमे भिक्षुकाः दृश्यन्ते एव। यदि त्वादृशानां कृते जलं पाययन् भवेयं तर्हि सर्वं समाप्तम् एव। एतावद्धनं व्ययीकृत्य अत्र किं युष्मान् जलं पाययितुम् आगतः वा? "इत्थम् उक्त्वा सः यात्री निरगच्छत्।

किञ्चित्कालानन्तरम् इतोऽपि एकः जनः आगतः। सः परमभक्तः भाति स्म। वृद्धया प्रार्थिते सति सपदि गङ्गाजलं दातुकामः सः वृद्धया कथितः-"वत्स! श्रुणु........' मम पतिं जलं पाययसि खलु परं ततः पूर्वं मम एकः नियमः अस्ति। बाल्यादारभ्य त्वया यदि किमपि पापं न आचरितं स्यात् तर्हि एव जलं पायय। यदि अनृतं ब्रवीषि तर्हि मम पतिः मृतः भवेत् तथा च तदर्थं त्वम् एव पापभाक् भविष्यसि।"

एतत् वचः श्रुत्वा सः भक्तोऽब्रवीत्- "उदरनिर्वाहोऽपि दुष्प्राप्यः तथापि नियमान् वदसि किम्? यदि अयं वृद्धः म्रियते तर्हि तत्पापमपि मयैव सोढव्यम्! अन्यच्च अहम् आशङ्के यत् उपकारं कर्तुकामात् मत् अपकारः भवेत्" इत्थं मन्यमानः सः भक्तः




उपहासम् अकुर्वन् स्वमार्गेण अगच्छत्। अनन्तरं कतिचन होरापर्यन्तं वृद्धदम्पत्योः सहायार्थम् कोऽपि तेन मार्गेण न अगच्छत्। किञ्चित् कालात् अनन्तरं कश्चन वनचरः विश्वेश्वरस्य दर्शनार्थं तेन एव मार्गेण आगतः।

वृद्धायाः विलापं श्रुत्वा सः तं वृद्धं जलं पाययितुकामः अभवत्। परन्तु तस्याः वृद्धायाः विचित्रं नियमम् आकर्ण्य सः विस्मितः अभवत्। तेन पुनरपि एकवारं वृद्धदम्पती अवलोकितौ । सपदि च विज्ञातम् यत् तयोः द्वयोर्मुखे दिव्यं तेजः विलसति। वनचरेण चिन्तितम्-'प्रत्येकं मनुष्यः जन्मनः अनन्तरं किमपि पापम् आचरति एव'। तादृशो जनः

एव न भवति यः कदापि पापाचरणं न करोति। अहं तु अटवीवासी, मम उद्योग एव जीवमात्राणां हिंसा इति। भगवता मह्यम् अयमेव व्यवसायः दत्तोऽस्ति। भगवता दत्तस्य एव उद्योगस्य निर्वहणं करोमि अहम् अतः नाहम् उत्तरदायी तदर्थम्। यदि एतौ सामान्यवृद्धौ स्यातां तर्हि तयोः मुखे ईदृशम् अद्भूतं दिव्यञ्च तेजः न विलसितम् अभविष्यत्। एतावसामान्यावेव। नूनमेतौ महापुरुषौ एव।'

'ननु मया अद्यपर्यन्तं कियन्ति पापकर्माणि आचरितानि स्युः, मम जलदानेन एषः यदि सामान्यः तर्हि मृतो भवेत्। मम इतोऽपि एकं पापकर्म वर्धेत परं यदि दिव्यात्मानौ स्तः तर्हि मम सर्वाण्यपि पापानि अनेन एकेनैव पुण्यकर्मणा प्रक्षालितानि भवेयुः।'

इदं निश्चित्य तेन तस्य वृद्धस्य मुखम् उद्घाट्य सः तं गङ्गाजलम् अपाययत्। तदा एव सहसा वृद्धदम्पतिः अन्तर्हितः अभवत् साक्षात् च पार्वतीपरमेश्वरौ तत्र प्रकटितौ अभवताम्।

इदं दृष्ट्वा भगवता शिवेन पार्वत्यै कथितम्- ''दृष्टं किल अस्य वनवासिनः धैर्यम्? एषः मम विश्वासम् अधिष्ठाय एव जीवति। अस्य मनः पवित्रम् अस्ति। अस्मद्दर्शनिन अस्य सर्वेषां पापानां क्षालनम् जातम्। ईदृशो जनः एव कैलासे निवसितुं योग्यः अस्ति। एतादृशाः एव जनाः मम वास्तविकाः भक्ताः भवन्ति ये च मम मिथ्यापूजार्चनं कुर्वन्ति ते न मम भक्ताः। ते माम् उपागन्तुं न शक्नुवन्ति।'' पार्वती परमेश्वरश्च तस्मै वनचराय आशीः दत्त्वा ततः अन्तर्हितोऽभवताम्।

तदैव एकं पुष्पकविमानं वनवासिनः कृते तत्र आगच्छत् तं वनवासिनम् देवलोकम् अनयत् च।





# बालादपि सुभाषितं ग्राह्यम्

द्वादशवर्षीय: गौरव: अन्येद्यु: भविष्यमाणाया: विज्ञानपरीक्षाया: कृते स्वगृहपुरत: उच्चासने उपविश्य अभ्यासमकरोत्। गौरवस्य जननी दुग्धचषकम् आनीय तस्मै अयच्छत्। ''अम्ब, नेच्छामि इदं दुग्धं यत: न रुचिकरमेतत्'' गौरव: अवदत्। ''वत्स गौरव, नैतद् युक्तम्। यदा अस्माकं धेनु: सुरभि: दुग्धमयच्छत् त्वं तद् नि:संदेहतया अपिब:। साम्प्रतं सा दुग्धदाने असमर्था। अत एव अस्माभि: अन्यत् दुग्धं पेयम्, यावत् न अन्या धेनु: प्राप्यते। अत: साधुबालो भूत्वा इदं दुग्धं पिब'' तस्य केशा: हस्तेन प्रेम्णा संस्पृश्य लक्ष्मी: अभणत्।

''लक्ष्मि, अपि अयच्छ: घासं धेनवे? कदाचित् क्षुधार्ता सा अस्मान् आह्वयति'' गौरवस्य पितामह: अकथयत्। ''तात, नैषा सुधा। न जाने केन सा पीडिता। प्रात:कालात् सा घासं न स्पृशति''? लक्ष्मी: अवदत्। ''गौरवस्य जन्मकाले अस्माभि: सा क्रीता। प्रतिदिनं सा चतुर्लिटर-दुग्धमयच्छत् यावत् शक्यम्'' पितामह: नि:श्वस्य अब्रवीत्।

गौरवस्य जनक: पाण्डुरङ्ग: गृहमागत्य अवदत् ''तात, मया राजुना सार्धं विक्रयव्यवहार: साधित:। स: अवदत् अस्या: धेन्वा: कृते न चतु: सहस्राधिकानि रुप्यकाणि यच्छेयम्। सायंकाले आगत्य धेनुं नयेयम्'' इति।

तच्छ्रुत्वा गौरव: चकितचकितोऽभवत्। स: दु:खेनावदत् ''तात्, अपि भवान् सुरभिं विक्रीणीते?''

''किं करोमि? षण्मासं यावत् वयं सुरभिं पुष्याम:। किन्तु न कापि अर्थप्राप्ति: तस्या:। अस्याम् अवस्थायां किं करणीयम्? अन्यच्च

पी.व्ही. शेषरत्नम्



सा अधुना वृद्धा। अतः व्यर्थमेव तस्याः पशुशालास्थापनम्'' अवदत् पाण्डुरङ्गः।

''तात, कथमेवं भाषते भवान्? सा मम मातृसमाना। तस्याः दुग्धं पीत्वा एव अहं पुष्टः। सा अस्मभ्यं दुग्धं, दधि, नवनीतं घृतं च अददात्। येषां विक्रयेण, कच्चित् अस्माभिः स्वभूमिः क्रीता स्वगृहं च निर्मितम्?''

समयाभावात् पाण्डुरङ्गः पुत्रेण सह विवादं नैच्छत्। सः अवदत् ''अथ किम्। किन्तु साम्प्रतं सा वृद्धत्वात् दुर्बलत्वाच्च दुग्धदाने असमर्था। अतः तस्याः कृते घासधनव्ययमनावश्यकम्। सा अनुपयुक्ता खलु अस्माकं कृते अधुना''।

पितुः स्वार्थबुद्धिः गौरवाय नारोचत। साशङ्कं सः अपृच्छत् ''ततः राजुः तस्याः किं करोति?''

'' किं करोति? सः तस्याः मांसं, त्वचं विक्रेष्यति? किन्तु किमर्थं चिन्तनमस्मिन् विषये?'' अभाषत पाण्डुरङ्गः अनिच्छया, या तस्य मुखे दृष्टिगोचरैव।

क्षुब्धव्याकुलः गौरवः अवदत्, ''तात, यदि वयं परितः विद्यमानं विश्वं प्रति संवेदनविहिनत्वेन वर्तेमहि, तर्हि अस्माकं कृते न किमपि अवशिष्टं स्यात्। अपि जानाति भवान्, मम विज्ञानशिक्षिका किमकथयत्? यदि मानवः केवलं स्वान्नवस्त्रनिवसनार्थं प्रयतेत अपि च परिसरावश्यकताः विस्मरेत् तहि निसर्गसंतुलनं विनश्येत्, नैसर्गिकापत्तयः च प्रादुर्भवेयुः''। स्वपुत्रवचोऽधिगन्तुमसमर्थः पाण्डुरङ्गः अपृच्छत् ''किं तेन भवितव्यम्?''

'रोगाः आपतिष्यन्ति। जीवितहानिः भविष्यति। परिसरस्य संतुलनं तु सकलजीवनाधारेणैव तिष्ठति। किंचन अवलोकनानुसारं विंशतिः प्रतिशतं (२०%) सस्तनप्राणिनः कदाचित् विनश्येयुः। शुकचटकाव्याघ्रादीनां संख्या प्रतिवर्षं न्यूना भवति इति जानात्यैव भवान्। अस्माकं विनाशकार्ये कथं वयमपि सम्मिलिता भवेम?''

''अतः किं कथयितुमिच्छसि त्वं?'' पाण्डुरङ्गः मृदुवाण्या अब्रवीत्। स्वपुत्रः तस्य प्राणात् प्रियतरः। अतः तस्य ईदृशेन वचसापि सः तस्मै नाकुप्यत्।

गौरवः स्वविचारान् प्रकटीकर्तुमभाषत ''कृपया कथयतु मे, अपि वृद्धत्वं मानवानां प्राणिनां च कृते समानमेव? सम्प्रतिः पितामहः

वृद्धः। किं कुर्मः वयं तेन सह?'' पुत्रवचांसि अग्न्यस्त्रप्रहाराः इव अभासत पाण्डुरङ्गस्य कृते।

''किं भाषसे त्वं? यदा प्रसवकाले मम जननी पंचत्वं गता तदा मम जनकः एव माम् अपालयत् अपोषयत् च। सांप्रतं यो वा को वा भवाम्यहम्, मम जनकस्य कारणादेव अवदत् पिता''।

गौरवः स्वपितुः अवस्थां ज्ञात्वा अब्रवीत् ''तात, अपि नीतिनियमाः भिन्नाः मानवप्राणिनोः कृते? सुरभिः अपि मम अपरा माता एव खलु या आसकलवर्षेभ्यः दुग्धं दत्त्वा मामवर्धयत। अपि योग्यमेतत् यत् सा दुग्धदाने असमर्थत्वात् मांसिकाय दत्ता भवेत्? क्षन्तव्यः अहम् ईदृशकथनार्थम्। किन्तु भवानपि वृद्धः भवेत्, अहमपि वृद्धः भवेयम्। ततः किं भवेत्?''

पाण्डुरङ्गः धेनुविक्रयविषये पुनर्विचारमकरोत्। यतः सा धेनुः कुटुम्बजनप्रिया एव। स्वपुत्रस्य प्रगल्भवचः श्रुत्वा सः संवेदनशीलः अजायत। सम्भ्रान्तः सः स्वप्रमादस्य निराकरणं कर्तुमैच्छत्। व्याकुलीभूत्वा सः अवदत् ''तव जनको भूत्वा योग्योपदेशः मम कर्तव्यः आसीत्। किन्तु मम विचारैः अहम् अन्धः जातः। यद्यपि तवं बालः, तथापि तव विचाराः स्पष्टाः, तव सहृदयता श्लाघ्या। 'बालाः निष्पापाः' इति जनाः कथयन्ति, तव विचाराः अपि निर्मलाः। अहं तस्याः कृते उत्तरदायी भवामि। तस्याः तृणखाद्येन मम धनागमे न काचिदपि बाधा भवेत्। पश्य! अहं राजुं वदेयम् ''सुरभिवहनार्थं मा आगच्छतु''। इति उक्त्वा, प्रेम्णा गौरवस्य ललाटं चुम्बित्वा पाण्डुरङ्गः निरगच्छत्।

पितामहेन आनन्दाश्रूणि परिमृज्य स्वपौत्रः आलिङ्गितः उक्तं च ''वत्स, मम अभिमानस्थानमसि त्वम्''।

''तात अपि सकलमिदं पितामहपौत्राभ्यां मनसि रचितं, ततः नाटितं च?'' पाण्डुरङ्गस्य निर्णयेन आनन्दितया लक्ष्म्या उक्तम् यत् सुरभिः तस्याः अपि अतीवप्रिया।



# विश्वास:

**त**दा श्यामला नवविवाहिता आसीत्। तस्यै स्वश्वश्रु: जयमाला न रोचते स्म। एकदा श्यामलाया: मातुल: तस्या: गृहमायात:। तदा तस्मै श्यामला 'मह्यं मम श्वश्रु: न रोचते' इति कथितवती। मातुल: उक्तवान्, ''किं तव शोभनकार्याणां कृते सा तव स्तुतिं कदापि न कृतवती?''

''आम्, सा तथा करोति। किन्तु सा प्रतिदिनं मम कार्येषु न्यूनातिन्यूनं चतुर्-पञ्च वारं दोषान् दर्शयति'' इत्युक्तवती श्यामला। ''यावदहं स्मरामि, तव माता तु दिने दशवारं दोषदर्शनं करोति स्म'' मातुल: अवदत्। ''आम्, सा मां कतिवारमपि निन्दतु, सा तु मम माता किल!'' श्यामला उक्तवती।

''तर्हि किं तव श्वश्रु: तुभ्यं तव प्रियपदार्थं पाचयितुम् अनुमतिं न यच्छति?'' मातुल: पृष्टवान्।

'' न, न। तथा नास्ति। यद् मे प्रियं तद् पाचयितुं मम कृते अनुमति: भवति। किन्तु प्रत्येकस्मिन् भोजनसमये सा तादृशम् एकं वा पदार्थं पाचयितुं कथयति य: मह्यं न रोचते'' श्यामला अगदत्। ''किन्तु तव माता तु तुभ्यं तान् एव पदार्थान् पाचयितुं कथयति स्म ये तुभ्यं कदापि न रोचन्ते'' मातुल: प्रत्युत्तरितवान्।

''किं स्वयं विश्रामं कुर्वती तव श्वश्रु: त्वां कार्ये नियोजयति?'' इति मातुल: पुन: पृष्टवान्। ''न ,तथा नास्ति। परन्तु सा मां कार्ये नियोजयतु अथवा विश्रामाय अनुमतिं वा ददातु, माता तु माता एव किल!''

किञ्चित् कालं यावत् एवमेव प्रश्नोत्तरसत्रम् अग्रे अनुवर्तयन् मातुल: श्यामलाम् अवदत् ''जाते, तव समस्याया: उत्तरं सरलं विद्यते। शृणु, श्वश्रु: अपि माता एव अस्ति इति चिन्तयतु।''

*- वसुन्धरा*





# शिथिलालय: - २०

*(शिखिमुखी विक्रमकेसरी द्वाभ्यामनुचराभ्यां सह ब्रह्मपुत्रनदप्रदेशं प्रातिष्ठेताम्। कामाख्यापुरं प्राप्य ते कस्यांश्चित् धर्मशालायां न्यवसताम्। तयोरनुपस्थितौ शिथिलालयस्य अर्चक: तयो: प्रकोष्ठं प्राविशत्। तं ग्रहीतुं शिखिमुखी प्रायतत परं स: अश्वमारुह्य तत: पलायनेन आत्मानम् अरक्षत्। ततस्तत:)*

धर्मशालाया: प्राङ्गणे महान् कोलाहल: प्रादुर्भूत:। आक्रोशेन सत्वरम् इतस्तत: धावनेन सम्भ्रान्ता: सर्वे। जनद्वयम् अश्वमारुह्य पलायेते स्म। अन्यौ द्वौ युवकौ तौ अनुधावत: स्म। तेन दृश्येन धर्मशालायां निवसन्त: सर्वेऽपि जना: प्राङ्गणे आश्चर्येण सम्मिलिता:। अजितवीरभद्रौ किञ्चित् अन्तरं यावत् अर्चकम् अन्वधावताम्। परं तं नागगृध्रं च गृहीतुं नाशक्नुताम् तेन च भूरि निराशावजायेताम्।

शिखिमुखी विक्रमकेसरी च स्वप्रकोष्ठद्वारि तालं संयोज्य प्रथमाट्टात् अवातरताम्। अजितवीरभद्रौ कृच्छ्रेण श्वसन्तौ समीपमागत्य अवदताम्, ''स्वामिनौ! आवां तौ ग्रहीतुं बहु प्रायतेवहि। परं तौ वेगेन पलायितुम् अशक्नुताम्'' शिखिमुखिन: मन: भृशमखिद्यत। हस्तसाज्जायमान: अर्चक: अकस्मात् पलायित:। एतावदुन्नतस्थानात् कूर्दित्वा स: पलायित: इति शिखिमुखी चिन्तयितुमपि अशक्त: आसीत्।

''शिखिन्, दुष्टोऽयम् अस्माकं दुर्निवारं

दासरि सुब्रह्मण्यम्



मस्तकशूलं जनयति। तेन सह सम्भाषणे वृथैव कालः यापितः। प्रकोष्ठे प्रविष्ट एव सः हन्तव्यः आसीत् अस्माभिः'' विक्रमकेसरी अब्रवीत्।

''यदि पुनरपि सः अस्माकं दृष्टिपथमायाति चेत् आदौ तदेव विधातव्यम्। किं तेन सह जल्पनेन। अद्ययावत् बहुवारं सः अस्मान् वञ्चयित्वा पलायितः। अग्रिमावसरे सर्वैः सावधानैः भवितव्यम्,'' शिखिमुखी अवदत्। धर्मशालायाः प्राङ्गणे सम्मिलिताः जनाः शिखिमुखिनं विक्रमकेसरिणं च नानाविधप्रश्नान् कृत्वा पलायितौ इति सर्वे मन्यन्ते स्म। धर्मशालायाः स्वामी आत्मनः दोषम् अवगत्य क्षमां याचमानः अवोचत, ''निःसंशयं ममैव स्खलनमेतत्। युवयोः प्रकोष्ठं प्रति गमनं नानुमन्तव्यम् आसीत्। किमपि मूल्यवद् वस्तु अचोरयतां किं तौ?''

''यद् वस्तु तौ इच्छतः तत्तु आवयोः समीपमपि नास्ति। वयं तु तीर्थानि अटामः। किं मूल्यवद् वस्तु वयं धरामः?'' इति शिखिमुखी अब्रवीत्।

''युष्माकं प्रकोष्ठात् किमपि न चोरितमिति ज्ञात्वा सन्तोषः मम। सोऽर्चकः इभ्यजातीयः इति भासते मे। तज्जातीयाः यावन्तः विश्वासार्हाः तावन्तः एव प्रसङ्गे सति विश्वासघातकाः अपि भवन्ति,'' धर्मशालायाः स्वामी अगदत्।

तस्यां निशायां शिखिमुखी विक्रमकेसरी च भृशं विमृश्य इभ्यजातीयानां ग्रामं जानन्तं कञ्चित् जनं मार्गदर्शकरुपेण स्वीकृत्य ब्रह्मपुत्रनदप्रदेशः प्रवेष्टव्यः इति निरचिनुताम्।

अपरेद्युः तौ धर्मशालास्वामिनं तद्विषये अपृच्छताम्। तयोः पृच्छां श्रुत्वा चकितः सः अवदत्, ''तस्मिन् प्रदेशे प्रवेशः नाम साक्षात् अग्निप्रवेशः एव। किमर्थं तत्र गन्तुम् इच्छथ? तत्र तु किमपि तीर्थं नास्ति।''

तच्छ्रुत्वा ईषत् स्मयित्वा शिखिमुखी अब्रवीत्, ''तत्र गमनम् अस्माकं प्राणापकारकं भवेत् इत्येषा भीतिः भवन्तं बाधते किल? परं अस्माकं प्राणापहारं कृत्वा कस्यापि को वा लाभः स्यात्? अस्मिन् प्रदेशे वर्तमानानि

सर्वाण्यपि क्षेत्राणि द्रष्टुकामाः वयम्। यत्र इभ्यजातीयाः निवसन्ति तत्र तु नैके देवालयाः सन्ति इति श्रूयतेऽस्माभिः।''

''भवतु नाम। भवतां प्राणभयशङ्कया ममत्वेन च मया यद् वक्तव्यं तत्तु मया उक्तम्। इतः परं भवतामेव निर्णयः प्रमाणम्। कदा प्रस्थातुम् इच्छथ? तं प्रदेशं प्रतिपदं जानन्तं कश्चन युवकमहं भवद्भिः सह प्रेषयामि। तस्य भोजनव्यवस्था तु युष्माभिरेव कल्पनीया। प्रत्यागमने तस्मै तस्य कार्यार्थं योग्यम् उपायनमपि देयम्,'' इति धर्मशालास्वामी अवोचत।




शिखिमुखी विक्रमकेसरी च तस्य निर्बन्धद्वयमपि अङ्गीकृतवन्तौ। अन्येद्युः उषस्युषसि एव धर्मशालाप्रमुखः कश्चन आत्रिंशद्वर्षदेशीयं जनम् आनयत्। वामनः सः पुष्टाङ्गः आसीत्। तं परिचाययन् धर्मशालाप्रमुखोऽब्रवीत्, ''अस्य नाम जाङ्गलः। एषः इभ्यजातीयानां प्रदेशं सम्यक् जानाति। एषः भवतां विश्वासपात्रं भवितुम् अर्हति। आबहोः कालात् परिचिनोम्यहमेनम्।''

शिखिमुखी जाङ्गलस्य निरीक्षणमकरोत्। तस्य मुखं दृष्ट्वा तस्य अन्तरङ्गस्य अभिज्ञानम् अशक्यमासीत्। तस्य मुखे अर्धस्फुटिता स्मितरेखा विलसति स्म। ततः परं कोऽपि भावः तस्य मुखमण्डले दृष्टिगोचरः नाभवत्। निर्विकारः सः कामपि प्रतिक्रियामदर्शयिन् स्थाणुवत् स्थितः आसीत्।

जाङ्गलस्य परिचयं कृत्वा धर्मशालास्वामी निर्गतः। तदा शिखीमुखी तमभाषत,''त्वं सर्वमपि प्रदेशं सुचारुतया जानासि इत्येतस्मिन् वयं कथं विश्वसिमः? इभ्यजातीयानां प्रदेशविषये कियत् ज्ञानं विद्यते तव? यदि त्वं सर्वमपि प्रदेशं सम्यक् न जानासि तर्हि त्वां मार्गदर्शकरूपेण स्वीकर्तुं नेच्छामः। तस्मात् प्रस्थानात् पूर्वमेव सर्वं स्पष्टतया वद। अपि जानासि प्रतिपदम् एनं प्रदेशम्?''

''मयि निःसंशयं विश्वसितु। इभ्यजातीनां प्रदेशे प्राप्तजन्मानं माम् इभ्याः परिचिन्वन्ति। तस्य प्रदेशस्य सर्वानपि अङ्गोपाङ्गान्




जानाम्यहम्'' जाङ्गल: अगदत्।

''शोभनम्! तव भोजनव्यवस्थां वयं कल्पयाम:। कामाख्यापुरं प्रत्यागतेषु अस्मासु तुभ्यं पञ्च सुवर्णमुद्रा: दद्म:। तावदेव दातुं धर्मशालास्वामी अस्मभ्यम् अकथयत्। अप्येतत् अनुमतं ते? एतत् अशेषेण विमृश्य प्रत्युत्तरं वद,'' शिखी अभाषत।

''किमत्र मया वक्तव्यं वा विमर्ष्टव्यं वा। भवन्त: एव मयि कृपादृष्टय: भवन्तु इति प्रार्थये,'' जाङ्गल: अबोचत्।

''वयम् अस्मिन् प्रदेशे स्थितम् इभ्यजातीयानां गोलभराग्रामं गन्तुमिच्छाम:। तं ग्रामं परित: नैके पुरातना: देवालया: सन्ति इति श्रूयते'' शिखिमुखी अवदत्।

गोलभराग्रामस्य नाम श्रुत्वा सहसा कम्पित्वा जाङ्गल: अवदत्,''स्वामिन्, अहं तं ग्रामं जानामि। परं यथा भवतोक्तम् तथा तत्र कोऽपि प्रसिद्ध: देवालय: न वर्तते। अहं पूर्वमेव कथयामि। तत्र गत्वा देवालयम् अप्राप्य मां मा आक्षिपतु भवान्।''

''परं देवालय: विद्यते इति तु श्रुतं किल आवाभ्याम्। अप्येतत् असत्यं विक्रम?'' शिखिमुखी सकृत विक्रमकेसरीणम् अपश्यत्।

तेन 'आम्' इत्यर्थ: शिरसि चालिते शिखीमुखी जाङ्गलम् अवोचत्,''त्वं तं ग्रामं गन्तुम् अस्मान् मार्गम् निर्दिश। वयं स्वयमेव देवालयम् अन्विष्याम:। अद्य सायंमेव प्रस्थातव्यम्। सिद्धतां कुरु।''

जाङ्गल: प्रणामं विधाय प्रतिगत:। सायङ्काले पाथेयं खरद्वये संस्थाप्य शिखिमुखी विक्रमसेसरी च द्वाभ्यां सहचराभ्यां सह ब्रह्मपुत्रनदप्रदेशं प्रातिष्ठेताम्। जाङ्गल: मार्गदर्शको भूत्वा तयो: पुरत: चलति स्म।

वने कस्यचित् तडागस्य तीरं ते प्राप्तवन्त:। तदानीं दिश: सर्वा: अपि तम:पूरिता जाता:।

तां निशां तडागतीरे एव यापयित्वा अपरेद्यु: प्रत्यूषसमये अग्रे प्रस्थातव्यमिति तै: निश्चितम्। अजितवीरभद्रौ पाकसिद्धतायां मग्नौ जाङ्गल: च इन्धनार्थं काष्ठान् सङ्गृहीतुं वनं गत:।

तत: गते जाङ्गले शिखीमुखी विक्रकेसरी

वृक्षमूले उपविश्य अग्रिमां योजनाम् अधिकृत्य मन्त्रणाम् आरभेताम्। विक्रमकेसरी अद्यापि जाङ्गले शङ्कते स्म। तस्मिन् पूर्णतया विश्वसितुं नेच्छति सः।

सः अयोग्यमार्गेण नीत्वा सङ्कटे कुहरे पातयिष्यति इति संशयः तस्य मनसि वरीवृत्यते स्म। सः स्वविचारं शिखिमुखिने अकथयत्। शिखिमुखिनः मनस्यपि तथैव शङ्का उत्पन्ना।

"अस्माभिः सावधानैः भाव्यम्। जाङ्गलः अर्चकानुयायिषु अन्यतमः इति मन्यसे किम्? सः दुष्टार्चकः अद्यापि अस्माकं कामपि क्षतिम् उत्पादयितुं न समर्थः तर्हि तस्य अनुचरोऽयं कथं वा अस्मान् बाधिष्यते?" शिखिमुखी अवदत्।

तस्य प्रत्युत्तरं वक्तुम् उद्युक्ते विक्रमकेसरिणि रक्तशुनकः सहसा अभषत् निबिडान् गुल्मान् च प्राविशत्। शिखिमुखी निःशब्दतया तम् अन्वगच्छत्। विक्रमकेसरी च असिकोषात् खड्गं निष्कास्य परितः प्रसृते घनान्धकारे कष्टेन द्रष्टुं प्रायतत।

रक्तशुनकः स्वल्पमेव अग्रे गत्वा एकत्र अतिष्ठत् ऊर्ध्वमुखो भूत्वा अभषत् च। शिखीमुखी गुल्मान् पर्यैक्षत। शत्रुः वृक्षे आत्मानं निगुह्य उपविष्टोऽस्ति इति सः अशङ्कत। परं तत्र तेन न कोऽपि दृष्टः।



तदैव अकस्मात् नातिदूरे कश्चन भाषमाणः वर्तते इति तस्य अभासत। सः अग्रे गन्तुमुद्युक्तः तावदेव तस्य रक्तशुनकः तं रोद्धुम् तस्य मार्गे स्थित्वा इतोऽपि उच्चैः अभषत। अस्मिन्नेव समये कस्यचित् पदरवः शिखिमुखिनः श्रुतिपथमायातः।

शुष्ककाष्ठबन्धं स्कन्धे आरोप्य तां दिशं सत्वरम् आगच्छन्तं जाङ्गलं सः अपश्यत्। शिखिमुखी अपि तं प्रति पदद्वयं यावत् चलितः तावदेव उपरिष्टात् वृक्षशाखायाः कश्चनः प्रचण्डः अजगरः जाङ्गले अकूर्दत् तस्य शरीरं च दृढतया पर्यष्वजत्। रक्तशुनकः उत्प्लुत्य अग्रे अधावत्। अजगरस्य पाशे बद्धः जाङ्गलः आत्यन्तिकभीत्या उच्चरवेणाक्रोशत्।

तत् दारुणं दृश्यं वीक्षमाणस्य शिखिमुखिन: मुखे अपि भयं दृष्टिगोचरतां गतम्। जाङ्गलस्तु महत्या विपदा ग्रस्त:। शिखिमुखी 'खड्गेन अजगरस्य शीर्षं छिनद्मि' इति अचिन्तयत्। परम् अजगर: तु जाङ्गलस्य कटिप्रदेशात् उपरितनं शरीरमेव परिष्वज्य तं गिलितुम् उद्युक्त:। घनान्धकारे अजगरं हन्तुं प्रयत्ने कृते जाङ्गलोऽपि अतिग्रस्त: भविष्यति इति शक्यता आसीत्।

जाङ्गल: वेदनाम् असहमान: आक्रोशति स्म। परम् अनन्तरं स: मृत्युभयेन अवाक् सञ्जात:। शिखिमुखी तमवदत्, 'मा भैषी: अहं अजगरस्य मस्तकमेव कर्तयामि' इत्युक्त्वा स: वामहस्तेन अजगरस्य कण्ठप्रदेशं धृत्वा तं दूरमाकृष्य खड्गेन प्राहरत्।

छिन्ने शिरसि अजगरस्य परिष्वक्ति: शिथिलतां गता। सश्च निष्प्राण: सन् भूमौ पतित:। जाङ्गलश्च भयातिरेकेण निश्चेष्टो भूत्वा छिन्नमूलवृक्ष: इव अध: अपतत्। जाङ्गलस्य आक्रोशं श्रुत्वा विक्रमकेसरी अजित: वीरभद्रश्चापि घटनास्थलं प्रति अधावन् तेऽपि तावता तत्र समागता:।

जाङ्गलम् उत्थापयितुं प्रयतमान: शिखिमुखी अब्रवीत्, "भयं मास्तु। मया तस्य अजगरस्य शीर्षमेव छिन्नम्। परं तस्य परिष्वक्तौ तव अस्थिभङ्ग: न जात: स्यात् इति आशासे।"

उत्तरं वक्तुकामस्य जाङ्गलस्य घनान्धकारात् किञ्चन भाषणं श्रुतम् अघोरप..पसकानां पूजकस्य अजगरस्य मस्तकं केन छिन्नम्? अधुना वयं तव मस्तकं छिन्द्म:। सिद्धो भव मरणार्थम्!" इति वदन्त: पञ्चषा: भयानका: मनुष्या: कुन्तहस्ता: शिखिमुखिनम् अभ्यधावन्।

*(अनुवर्तिष्यते)*



# चन्दमामा @ ६५ तमं वर्षम्

९४७-तेलुगु-तमिळभाषयो:
९४८-कन्नडभाषायाम्
९४९-हिन्दीभाषायाम्
९५२-मलयालम्-मराठीभाषयो:

१९५४-गुजरातीभाषायाम्
१९५५-आङ्ग्लभाषायाम्
१९५६-ओरिया-सिन्धीभाषयो
१९७२-बङ्गभाषायाम्
१९७५-गुरुमुखीभाषायाम्
१९७६-आसामीयभाषायाम्
१९७८-सिंहलभाषायाम्
१९८४-संस्कृतभाषायाम्

कानिचन प्रकाशनानि (सिन्धी-सिंहल-गुरुमुखीभाषासु तथा द्विभाषिकानि) किञ्चित् कालं यावत् प्रकाशितानि।

२००३-जुनियर् चन्दमामा तथा सिंगापुरदेशस्य कृते आङ्ग्ल-तमिळद्विभाषिकं ,आङ्ग्ल-तेलुगु,तमिळ-हिन्दी-गुजराती द्विभाषिकं उत्तर-अमेरिकानिमित्तम् प्रकाशितम्।

२००४-सन्ताली इति ज्ञातीभाषायां प्रकाशितं प्रथमं मासिकम्



२००८-सप्तप्रादेशिकभाषासु जालपुटानि आरब्धानि। आन्तर्जाल-क्रयणव्यवस्था च आरब्धा।

२०११- आय्-पॅड, आय्-फोन इति उपकरणानां कृते चन्दमामा डिजिटलस्वरूपेण प्रकाशिता। श्रव्यकथा: अपि निर्मिता:।

बहुभाषासु चन्दमामा, एका समाना परम्परा

# कुशलौ बुद्धिमन्तौ रामुः सोमुः च

**रा**मुः सोमुः च शिवपुरग्रामवासिनौ यमलौ आस्ताम्। स्वस्य तीक्ष्णबुद्ध्या ताभ्यां नैकवारं नैकाः समस्याः समाहिताः ग्रामजनानां प्रशंसापात्रौ च अभवताम्। एकदा भूस्वामिनः गृहात् प्रत्यागताभ्यां रामुसोमुभ्यां नारायणस्य गृहस्य पुरतः महान् सम्मर्दः दृष्टः। तौ अपि तत्र सम्मर्दे सहभागिनौ अभवताम्। तत्र ताभ्यां रङ्गनाथः नारायणं तस्य अपात्रताविषये निर्भर्त्सयन् दृष्टः। किञ्चित् कालं रङ्गनाथेन कृतां निन्दां श्रुत्वा रामुः तमवदत्,''महाभाग, भवान् बुद्धिमान् दृश्यते। अहं भवन्तं किमपि प्रष्टुम् उत्सुकोऽस्मि'' इति।

रङ्गनाथः रामुम् उपेक्षया दृष्ट्वा उक्तवान्,''ओः! मां प्रश्नं प्रष्टुम् आत्मानम् अर्हः मन्यसे किं? भवतु तर्हि, पृच्छतु।'' रामुः अवदत्,''अतीव सरलः अयं प्रश्नः। कथं मया कन्दुकः क्षेपणीयः येन कन्दुकः अर्धमन्तरम् अग्रगामी भूत्वा पुनश्च अर्धमन्तरं पृष्ठगामी भवेत्?'' इति। प्रश्नं श्रुत्वा रङ्गनाथः विवर्णमुखः सञ्जातः। तथापि कथञ्चित् धैर्यं सङ्गृह्य सः उच्चैः क्रोधेन च अवदत्,''कीदृशः अयं निरर्थकः प्रश्नः?'' इति।

सोमुः अवदत्,''श्रीमन्, केवलं भवान् अस्य उत्तरदाने असमर्थः इति कारणात् किमेनं प्रश्नं निरर्थकं भावयति भवान्? यदि वयं कन्दुकम् आकाशे उत्क्षिपामः तर्हि प्रथमं यस्यां दिशि क्षिप्तः तामेव उर्ध्वदिशं गच्छन् अग्रगामी भवेत्। किञ्चित् कालानन्तरं स्वयमेव कन्दुकः अधः पतन् पृष्ठगामी भवति। नारायणमहोदयस्य सामान्यः कर्मकरः अपि यावत् जानाति किं तावदपि भवान् न जानाति?'' इति। अनेन रङ्गनाथः स्तम्भितवाक् जातः।

– *लक्ष्मीगायत्री*





# पण्डितपुत्रः

**अथ** कदाचित् प्रयागनगरं राजा प्रदीपः अधिशास्ति स्म। तस्य आस्थानं नैकैः पण्डितैः विशोभते स्म। तेषु कतिचन वंशपरम्परया आस्थाने पण्डितपदं भूषयन्ति स्म। तेषु अन्यतमः कश्चन आसीत् बद्रीप्रसादः।

बद्रीप्रसादस्य पिता, पितामहः, पूर्वजाश्च महान्तः विद्वांसः प्रयागराजस्य आस्थानाश्रिताः च आसन्। परं बद्रीप्रसादस्तु केवलं नामधारी पण्डितपुत्रः आसीत्, तन्नाम साक्षात् मूर्खः आसीत् सः। बहुवर्षाणि यावत् श्रावं श्रावं निःसन्देहं कतिपयश्लोकान् जानाति स्म परं तस्य व्यावहारिकं ज्ञानं लेशमात्रमपि नासीत्। तथापि तस्य महामूर्खत्वं तु राज्ञा न कदापि ज्ञातम्।

किन्तु अन्ये आस्थानविद्वांसः बद्रीप्रसादस्य अज्ञानं लीलया अवगतवन्तः। मूर्खे सत्यपि बद्रीप्रसादः तैः साकम् आस्थानविद्वत्पदं भुङ्क्ते इति तेभ्यः सर्वथा न रोचते स्म। अतः ते राज्ञे प्रत्यपादयन्, ''देव, न किञ्चिदपि जानाति एषः बद्रीप्रसादः। नितरां मूर्खः सः। पण्डितरूपेण तस्य आस्थाने उपस्थितिः तु आस्थानस्य कलङ्कः इव। भवान् स्वयमेव तं परीक्ष्य सत्यस्थितिं जानातु'' इति।

तच्छ्रुत्वा राजा चकितचकितोऽभवत्। यतः बद्रीप्रसादस्य पिता तु महापण्डितः आसीत्। तस्य स्वर्ग-गमनानन्तरं तस्य स्थानं बद्रीप्रसादः अवाप्नोत्। भालफलके भस्मचर्चनं, कण्ठे रुद्राक्षमालाः, स्कन्धे उत्तरीयं च वीक्ष्य कोऽपि जनः तं पण्डितमेव भावयति स्म। सः

के. नरसिंह राव

वस्तुत: मूर्ख: वा न वा इति परीक्षितुं कदाचित् राजा तम् आस्थान एव सर्वेषां पुरत: अपृच्छत्, ''पण्डितप्रवर, कच्छपान् गृह्णत: नैकान् जनान् अपश्यमहम्। कच्छपग्रहणेन को लाभ: इति अहम् अवगन्तुं न शक्त:''।

एतच्छ्रुत्वा बद्रीप्रसाद: नि:सङ्कोचं सपदि अवदत्, ''राजन्, कच्छपस्य दुग्धं नितरां स्वादु वर्तते। तस्य केशैश्च काश्मीरीय-उत्तरीयाणि निर्मीयन्ते'' इति।

राजा आश्चर्यम् अन्वभवत्। आस्थाने केचन जना: हसितवन्त:। बद्रीप्रसादस्य मूर्खत्वं प्रकाशम् आगतम्। राजा पुनरपि अपृच्छत्, ''पण्डितपुत्र, कश्चन शशक: उच्चै: गर्जन् कश्चन सिंहम् आक्रामत् इति श्रूयते मया। अपि सत्यमेतत्?''

''नायम् आश्चर्यविषय:, महाराज। सिंहस्तु शशकस्य आहार्य:। शास्त्रेषु लिखितमस्ति यत् शशक: उत्प्लुत्य सिंहम् अभिधावति। तस्य उत्तमाङ्गं च भित्वा तं निहत्य खादति।''

आस्थानजना: उच्चै: अहसन्। राजा अपि तत् विचित्रमुत्तरं श्रुत्वा अहसत्।

''भवतु पण्डितपुत्र! कदाचिदहं ज्वलन्तं तडागम् अपश्यम्। तस्मिन् तडागे नैकोऽपि मत्स्य: दृष्ट: मया। किं स्यात् अस्य कारणम्?'' राजा अपृच्छत्।

''तडाग: ज्वलति स्म किल? अत: तडागस्था: मत्स्या: पार्श्वस्थं वृक्षम् आरूढवन्त: स्यु:।''

''महाराज, स्वयमेव दृष्टं भवता एतस्य मूर्खत्वम्। एष: मूर्ख: झटिति आस्थानात् दूरीकरणीय:'', पण्डिता: अब्रुवन्।

''इत्थं विनोदेन मनोरञ्जनं कर्तुं क्षममेनम् आस्थानात् दूरीकर्तुं नेच्छामि। अद्यैवाहं बद्रीप्रसादम् आस्थाने विदूषकरूपेण नियोजयामि'', राजा अवोचत।



# कलहः

अथ कदाचित् कस्यचित् गुरोः शिष्यद्वयम् आसीत्। तयोर्मध्ये सदैव कलहः भवति स्म। तयोः सम्मेलनं कारयितुं गुरुः नैकवारं प्रयत्नं कृतवान्। किन्तु न कोऽपि उपयोगः जातः गुरोः प्रयत्नानाम्। शयनात् पूर्वं यदा तौ द्वौ गुरोः पादयोः समीपम् उपविश्य गुरुसेवां कुर्वतः स्म तदा अपि प्रतिदिनं तयोः कलहः जायते स्म। अतः गुरुः एकस्मै शिष्याय एकं पादं मर्दयितुम् अन्यस्मै च अपरं पादं मर्दयितुम् आज्ञापितवान्।

अथ कदाचित् दक्षिणपादस्य सेवां कुर्वन् शिष्यः कार्यार्थं बहिर्गतवान्। तस्यां रात्रौ अपरः शिष्यः गुरोः केवलं वामपादं मर्दयित्वा गन्तुमुद्युक्तः। ''जात, मम दक्षिणपादमपि मर्दय'' इत्युक्तवान् गुरुः। किन्तु तस्य शिष्यस्य गुरोः दक्षिणपादे तावान् क्रोधः आसीत् यावान् दक्षिणपादस्य सेवां कुर्वति अपरस्मिन् शिष्ये। अतः सः क्रोधेन एकं बृहत् पाषाणम् आनीय गुरोः दक्षिणपादे क्षिप्तवान्। पाषाणाघातस्य वेदनया गुरुः उच्चैः आक्रोशं कर्तुम् आरब्धवान्। तं मूर्खं शिष्यं सम्यक् तर्जयित्वा वैद्यम् आहूय स्वचिकित्सा कारिता गुरुणा।

कार्यार्थं बहिर्गतः शिष्यः आश्रमं पुनरागतः। गुरोः दक्षिणपादे औषधस्य लेपनं दृष्ट्वा चिन्तया सः गुरुं पृष्टवान्,''गुरुवर्य, भवतः पादः कथं व्रणितः जातः?'' इति। यद् घटितं तद् सर्वमपि गुरुणा उक्तम्।

''तस्य दुष्टस्य एतावत् धार्ष्ट्यम्! सः मां कातरं मन्यते किम्?'' इत्युक्त्वा सोऽपि एकं बृहत् पाषाणम् आनीतवान्। गुरुणा बहु किमपि कथिते सत्यपि शिष्येण पाषाणेन गुरोः वामपादे आघातः कृतः।





# उत्तमः वैद्यः

वल्लभपुरस्य निवासी रमेशः प्रसिद्धः वैद्यः ।

जनाः अपि एतम् अद्वितीयं मन्यन्ते स्म वैद्यशास्त्रे । सः वैद्यः सन्तानहीनः । सः स्वकीयां विद्याम् अन्यं बोधयितुम् इच्छति। किन्तु तस्य विश्वासः आसीत् यत् अध्ययने नितरां श्रद्धा, आसक्तिः च यस्मिन् भवति स एव बोधनाय अर्हः इति ।

कदाचित् रमेशस्य बन्धुः कश्चित् कमल-नामकः पुत्राभ्यां सह वैद्यं द्रष्टुम् आगतः । आ केभ्यश्चित् दिनेभ्यः कश्चन रोगः तं बाधते स्म । अत एव चिकित्सार्थं सः अत्र आगतः । तस्य पुत्रौ धनञ्जयराघवौ वैद्यवृत्तौ आसक्तिं प्रदर्शितवन्तौ ।

रमेशः स्वचिकित्सया सप्ताहाभ्यन्तरे एव कमलस्य रोगस्य तीव्रतां न्यूनीकृतवान् । अनेन सन्तुष्टः कमलः प्रस्थानात् पूर्वं रमेशं प्रशंसन् – ''भवान् साक्षात् धन्वन्तरिः एव। किन्तु भवता सहैव भवति विद्यमानं प्रावीण्यम् अपि विनष्टं न भवेत्'' इति उक्तवान् ।

तदा रमेशः – ''मया किं कर्तुं शक्येत ? यस्मिन् वैद्यशास्त्रे श्रद्धा अस्ति तादृशम् एव अहं बोधयितुम् इच्छामि'' इति उक्तवान् ।

तदा कमलः – ''मम पुत्रयोः उभयोरपि अस्मिन् शास्त्रे अभिरुचिः अस्ति । एतौ उभौ अपि भवान् शिष्यत्वेन स्वीकरोतु'' इति सविनयम् अवदत् ।

रमेशः – ''अहम् एतौ परीक्ष्य स्वनिर्णयं श्रावयामि'' इति उक्तवान् । तेन सन्तुष्टः कमलः नगरं गतः ।

तयोः मध्ये धनञ्जयः बुद्धिमान्, विषयं झटिति अवगन्तुं समर्थः च । राघवः तु शान्तमनस्कः । सर्वं विषयं सः द्विवारं श्रुत्वा

एन्. पद्मलता जयराम



एव अङ्गीकरोति । रमेशः दश दिनानि यावत् तौ उभौ अपि सस्यानां मुलिकानां वनौषधस्य च वैशिष्ट्यं बोधितवान् । चिकित्साक्रममपि अवगन्तुं सूचितवान् ।

एकदा रमेशेन वार्ता प्राप्ता यत् पार्श्वग्रामस्य भूस्वामी नितराम् अस्वस्थः इति । भूस्वामिना सेवमानः आहारः जीर्णः न भवति । एतां वार्तां यः आनीतवान् तमेव रमेशः भूस्वामिनः विषये इतोऽपि कांश्चन प्रश्नान् पृष्टवान् । तेन रमेशेन ज्ञातं यत् भूस्वामी अजीर्णरोगपीडितः इति । सः भूस्वामिनः चिकित्सां कर्तुं धनञ्जयं सूचितवान्। धनञ्जयस्य प्रस्थानात् पूर्वम् अजीर्णरोगनिमित्तं कीदृशस्य औषधस्य उपयोगः करणीयः इत्येतम् अंशम् अपि उक्त्वा प्रेषितवान् ।

दिनद्वयं यावत् गुरोः वचनानुसारमेव औषधं निर्माय भूस्वामिनं चिकित्सितवान् धनञ्जयः । तेन दत्तस्य औषधस्य स्वीकारात् भूस्वामी अपि किञ्चिदिव स्वस्थः जातः । किन्तु अल्पे समये एव पुनरपि सः पूर्वतनेन एव रोगेण पीडितः अभवत् । अस्य कारणम् अजानन् धनञ्जयः किं करणीयम् इति अज्ञात्वा प्रत्यागतः ।

राघवः भूस्वामिनः चिकित्सार्थं गुरोः अनुमतिं प्रार्थितवान् । रमेशेन अनुमतिः दत्ता । तत्र गतः राघवः प्रथमं भूस्वामिना स्वीक्रियमाणम् आहारं परीक्षितवान् । तस्य आहारे घृतस्य तैलस्य च उपयोगः अधिकः आसीत् । तस्य परिशीलनात् दोषः कुत्र अस्ति इति राघवः ज्ञातवान् एव ।

सः भूस्वामिनम् उक्तवान् – ''महोदय ! आहारविषये पथ्यम् आवश्यकम् । दश दिनानि यावत् भवान् तिन्त्रिणीरसेन, मथितेन तक्रेण वा सह भोजनं करोतु । तदा एव गुरुणा दत्तम् औषधं फलकारि स्यात्'' इति ।

भूस्वामी तस्य वचनम् अङ्गीकृत्य तथैव आचरितवान् । सप्ताहाभ्यन्तरे एव तस्य रोगः उपशान्तः । भूस्वामी राघवाय उपायनानि दत्त्वा प्रेषितवान् ।

राघवः यदा प्रत्यागतः तदा रमेशः गृहे न आसीत् । धनञ्जयः राघवात् सर्वं विषयं ज्ञातवान् । सायं यदा रमेशः गृहं प्रत्यागतः तदा धनञ्जयः – ''गुरुवर्य ! राघवेण दत्ता चिकित्सा मया ज्ञाता । जीरिका, मरीचः, गुडः इत्येतैः निर्मितं कषायं सः दत्तवान् ।

अहमपि भवतः वचनानुगुणमेव तमेव कषायं तस्मै रोगिणे दत्तवान् आसम् । किन्तु अहं सफलः न जातः । किमर्थम् एवं जातम्?''

तदा रमेशः हसन् उक्तवान् – ''रोगी यथा वैद्येन परीक्ष्यते तथा रोगोऽपि परीक्षणीयः । तेन रोगस्य मूलं कारणं ज्ञातव्यम् । सः भूस्वामी अधिकम् आहारं सेवते । एतादृशे प्रसङ्गे औषधात् अपि पथ्यमेव अधिकलाभकारि । एतत् ज्ञातवान् राघवः तत्र सफलः सञ्जातः'' इति ।

परेद्यवि तौ उभौ अपि वनं प्रति गतौ मूलिकासङ्ग्रहणाय । तदा कस्यचन वृक्षस्य अधः कश्चित् मूर्च्छितः सन् पतितः ताभ्यां दृष्टः । अतः धनञ्जयः – ''एषः कोऽपि भिक्षुकः स्यात्। बुभुक्षया मूर्च्छितः इति मन्ये । गच्छाव तावत्। आवां यदर्थम् आगतौ तत् कार्यं समापयाव'' इति राघवम् उक्तवान् ।

''यदर्थम् आवाम् आगतौ तत् कार्यं तु कुर्वः एव । किन्तु एतम् एतादृश्यां स्थितौ परित्यज्य गमनं न उचितम्'' इति वदन् राघवः पतितस्य मुखे जलसेचनं कृतवान् । तदा सः सचेतनः जातः ।

ततः राघवः – ''धनञ्जय ! एतं गृहं नीत्वा भोजयाव । तदा एतदपि ज्ञायते यत् बुभुक्षा-कारणात् एव एषः मूर्च्छितः उत अन्यरोग-कारणात् इति । गुरुणा एषः परीक्षणीयः'' इति वदन् तं गुरुसमीपम् आनीतवान् ।

रमेशः सर्वं वृत्तान्तं ज्ञात्वा धनञ्जयं बोधितवान् – ''असहायानां, रोगिणां च विषये वैद्येन दया प्रदर्शनीया । तदा एव वैद्येन उन्नतं स्थानं प्राप्तुं शक्यते'' इति ।

गुरोः वचनं श्रुतवतः धनञ्जयस्य मुखं विवर्णं जातम् । तेन उक्तं – ''क्षन्तव्यः अहम् । वैद्यत्वं प्राप्य अधिकं धनं सम्पादनीयम् इति मम इच्छा आसीत् । किन्तु इदानीं मया ज्ञातं यत् वाणिज्यमेव अधिकस्य धनस्य सम्पादनाय योग्या वृत्तिः इति । ततः सः स्वगृहं प्रतिगतः ।

राघवः रमेशस्य शिष्यः भूत्वा वैद्यशास्त्रं सम्यक् अधीत्य गुरोः अपि उत्तमः वैद्यः इति यशः प्राप्तवान् ।



# ऋणप्रत्यर्पणम्

रामपुरग्रामस्य कृषिकाः ऋणप्रत्यर्पणं न कुर्वन्ति इति चिन्तामग्नः आसीत् भूस्वामी जगत्पतिः। सर्वे कृषिकाः भूस्वामिना ग्रामसभास्थले मिलितवन्तः। 'कृषेः अधिकम् उत्पन्नं न लभामहे' इति तेषां समस्या आसीत्।

अतः 'नगरं गत्वा किमपि कार्यं कृत्वा लब्धेन वेतनेन भागशः ऋणप्रत्यर्पणं कुर्मः' इति तेषां विचारः। परन्तु ग्रामसीमायां वर्तमानः निर्झरः आवर्षं जलेन परिपूर्णः अतः तेषां कृते दुस्तरः भवति स्म। तदा भूस्वामी ग्रामप्रमुखं दृष्ट्वा अपृच्छत्, ''कथमियं समस्या दुर्लक्षीकृता भवता दीर्घकालपर्यन्तम्?'' इति।

तदा ग्रामप्रमुखः अवदत्, ''यदि वयम् एतेषां समस्यानां विषये चिन्तयामः तर्हि कदापि ऋणं पुनः न प्राप्नुमः'' इति। मुकुन्दः नाम एकः युवकः मध्ये अपृच्छत्, ''भोः स्वामिन्, वर्षद्वायात् पूर्वं षष्ठीपूर्तिसमये भवता निर्झरं पारयितुं सेतुनिर्माणं प्रतिश्रुतमासीत्।''

क्रोधेन तं पश्यन् भूस्वामी पृष्टवान्, ''कथम् ऋणप्रत्यर्पणसमस्या अनेन सह सम्बद्धा?'' मुकुन्दः सरलतया प्रत्युदतरत्, ''मम पिता सर्वदा कथयति यद् क्रियारहितानि वचनानि अप्रत्यर्पित-ऋणानि इव भवन्ति'' इति।

मुकुन्दस्य कथनस्य आशयं भूस्वामी अवगतवान्। सः झटिति ग्रामप्रमुखम् अवदत्, ''वचनानुसारं यद् यद् ग्रामस्य कृते आवश्यकं तत् तत् सर्वं कुर्वन्तु। ऋणप्रत्यर्पणविषये वयम् अनन्तरं चिन्तयामः'' इति।

*- जोन्नालगड्डा रत्न*



# कोऽहं भविष्यामि ?

**प्रवेश:** - अखिल-भारतीयस्तरे आयोजिताया: लेखनपरीक्षाया: परिणामानुसारं चयनप्रक्रिया भवति। लेखनपरीक्षायां द्विघण्टात्मिका एका पत्रिका भवति। परीक्षायाम् आङ्ग्लभाषाज्ञानं,गणितम्, भौतिकशास्त्रं तथा तर्कशक्ति: परीक्ष्यन्ते। अभ्यासक्रमस्य आरम्भात् पूर्वम् आरोग्यप्रमाणपत्रम् अपेक्षितम्।

विमानचालकप्रशिक्षणव्यवस्था यत्र वर्तते तादृश्य: भारतीयसंस्था: अधोनिर्दिष्टा: सन्ति।

- Indira Gandhi Rashtriya Uran Akademi (IGRUA), Raebareli, (UP) (www.igrua.gov.in).
- Orient Flight School Chennai (www.orientflights.com).
- Thakur College of Aviation, Samata Nagar, Kandivli (E) Mumbai.
- Institute of Aviation and Aviation Safety (IAAS), Mumbai.
- Rajiv Gandhi National Flight Training Institute.

अतीव रोमाञ्चकम् आसीत् एतत् ज्ञानं खलु। यदि युष्माकं प्रवासे रुचि:, जगद्भ्रमणं कर्तुम् इच्छथ तर्हि विमानचालनव्यवसाय: अतीव उत्तम:। साम्प्रतम् अत्रैव विरमाम:। आगामिनि मासे पुनर्मिलाम:।

*- साई*

**मॅक्नामारस्य क्लेशकर: क्षण:**

**आ**वश्यकता इति संशोधनस्य माता गण्यते। 'क्रेडिट कार्ड'(उद्धारपत्रम्) इत्यस्य निर्मिति: कथं जाता स्यात्? १९४९ तमे वर्षे फ्रॅङ्क मॅक्नामार: उपहारगृहे यदा भोजनं समापितवान् तदा एव तेन अवगतम यत् धनस्यूत: तु तेन गृहे एव विस्मृत:। अत: सङ्कटात् अस्मात् निवारयितुं गृहं प्रति दूरवाणीं कृत्वा तेन पत्नी आह्वातव्या अभवत्। एतस्मात् प्रसङ्गादनन्तरमेव 'डायनर्स क्लब' इति उपक्रम: तेन आरब्ध: यस्मात् अग्रे 'क्रेडिट कार्ड' इति कल्पना उदिता।

# चन्दमामीया सामान्यज्ञानपरीक्षा - ३४

*(ऊनषोडशवर्षीयाणां कृते)*

***Co-sponsored by Infosys FOUNDATION, Bangalore***

**समुचितोत्तरदाता अर्हति `२५०/- पारितोषिकत्वेन***

***एकाधिकजना: यदि शुद्धम् उत्तरं प्रेषयेयु:, तर्हि प्रतिजनं `५०/- दास्यन्ते पारितोषिकत्वेन।**

**अधोक्तं क्रियतां भवद्भि:-**

१. उत्तराणि समपत्रे लेखनीयानि।

२. नाम, वय: सङ्केत: (पिन् कोड्सहित:) प्रेषणीय:।

३. पिहितपत्रे **चन्दमामीया सामान्यज्ञानपरीक्षा** - ३४ इति लेखनीयम्।

४. ३१ दिसम्बर पूर्वं भवदुत्तराणि अस्माभि: प्राप्तानि भवेयु: तथा तानि प्रेषणीयानि।

५. २०१२ तमवर्षस्य फरवरीमासीये अङ्के परिणाम: प्रकाशयिष्यते।

## पक्षिणां विषये प्रश्नमञ्जूषा



१) क: स: पक्षी यस्य बृहत्स्यूतयुता चञ्चु: १३ लिटरमितं जलं धारयितुं शक्नोति?

२) भोजनसमये क: पक्षी स्वस्य चञ्चुम् अधोमुखी करोति?

३) क: पक्षी स्वस्य शत्रून् दूरे स्थापयितुं पूतिगन्धं तैलं वमति?

४) कस्य पक्षिण: नीडं 'फूटबॉल' कन्दुकस्य द्विगुणितं गात्राकारं भवति?

५) कस्य पक्षिण: पक्षौ चूर्णरूपेण छिन्नौ भवत:?

६) कस्य पक्षिण: शावका: १६ किलोमित: भवति?

७) स्वशरीरस्य अष्टगुणितं जलं पातुं समर्थ: क: पक्षी?

## चन्दमामीया सामान्यज्ञानपरीक्षा - ३१ अगस्त २०११ उत्तरम्

१) १० मे १८५७ २) इन्दिरा प्रियदर्शिनी ३) सुचेता: कृपलानी ४) १ जुलै १९४७ ५) क्लीमेण्ट ॲटली ६) संन्यास: ७) दक्षिण-कोरिया,बाहरेन, काँगो- गणराज्यम्

*August'11 Winners: 1. Deksha Dubey, Seranpore, Hooghly(Dist.), West Bengal - 712249.*
*2. Yagnesh Saradhchandra Chaphalkar, Pakhal Road, Nashik - 422006.*
*3. Shuvasish sarkar, Malda, Chobby bhawan, West Bengal-732101.*



# हस्यताम् उदरोपपीडम्



*एका महिला वैद्यं प्रति:* - ''वैद्यराज, मम पति: निद्रावस्थायां जल्पति।''

*वैद्य:* - ''नैषा गभीरा बाधा। औषधेन शीघ्रमेव तं स्वस्थं कारयामि।''

*महिला* - ''नैतद् साहसमम् अचरतु। तथा कर्तुं चिन्तनमपि न करोतु यत: स: एव काल: यदा स: मया सह सम्भाषते।''



*रवि:* - अहं प्रतिदिनम् एकं सत्कार्यं करोमि।

*अरुण:* - उत्तमम्! तर्हि अद्य किं सत्कार्यं कृतं भवता?

*रवि:* - गृहे एकस्य कृते पर्याप्तमेव एरण्डतैलम् अवशिष्टमासीत् उदारमनसा मया मम भ्रात्रे तद् दत्तम्।



*पिता* - सर्वत्र वृद्धि: एव दृश्यते। खाद्यपदार्थानां मूल्यं वस्त्रमूल्यम्, आयकर: इत्येतद् सर्वमपि वृद्धिङ्गतम्। अस्ति वा किमपि यद् न्यूनं जायमानम् वर्तते?

*पुत्र:* - श्रुत्वा कदाचित् सन्तोषम् अनुभवेत् भवान्। परन्तु निरन्तरं न्यूनं जायमानं अधोगतिपरं केवल मम प्रगतिपुस्तकं वर्तते।



*प्रवासी* - किमिदं स्थलम् आरोग्यवर्धकम् अस्ति?

*स्थानिक:* - अथ किम्! यदा अहम् अत्र आगतवान् तदा मम शिरसि केशा: न आसन्, किमपि वक्तुम् अशक्त: अहम् चलितुमपि असमर्थ:, अन्यै: उद्धरणीय: भवामि स्म।

*प्रवासी* - अहो आश्चर्यम्। कदा आरभ्य अत्र आगत: भवान्?

*स्थानिक:* - अत्र एव जात: अहम्।

# कुकीज्-आनन्दस्य कणिका:



*पिष्टके: उत्सव: क्रियताम्। पिष्टक-निर्माणे जगति भारतस्य द्वितीय: क्रमाङ्क:।*



फॉर्च्युन कुकीज् नाम पर्पटी-पिष्ट्कं यस्मिन् कर्गजस्य लघुभाग: वर्तते। केषांचन कृते फॉर्च्युन कुकीज्निर्माणम् इति महत्त्वपूर्ण: उद्योग:।



अमरेट्टी नाम लघुपिष्टकानि इटलीत: सन्ति। एतस्य कृते एका लोककथा प्रसिद्धा। पुरा नवदम्पती अतिथे: स्वागतं कर्तुम् इच्छत: स्म। अत: तौ शर्करा, नेत्रफलानि, अण्डानि, पिष्टं च आदि एकत्रीकृतवन्तौ। तै: च स्वादिष्टानि पिष्टकानि कृतानि। स: अतिथि: तथा च केचन जना: एतेषां पिष्टकानाम् आस्वादका: जाता।



टोलहाऊस इन एतस्य स्वामिनी 'रुथ वेकफील्ड' महोदया आसीत्। सा चाकलेह-कुकीज् कर्तुम् आरभत। सा नेस्ले चाकलेह-शकलानि पिष्टकस्य मिश्रणे मिश्रितवती। तानि द्रवीभवन्ति इति तस्या: चिन्तनम्। किन्तु तत् नाभवत्। एतादृशम् अस्ति 'चाकलेह-चिप-कुकीज्' एतस्य जन्म।



जर्मनीमध्ये शुण्ठीब्रेड एतस्य पारंपारिकप्रकार: प्रसिद्ध: अस्ति। तस्य नाम 'लेबकुचेन'। एतस्य गुणवत्ता उत्तमा आसीत्। एतेन आयकरस्य मूल्यं दीयते स्म। तथा एव राजपारितोषिकरूपेणापि एतानि पिष्टकानि दीयन्ते स्म।



क्रॅकर्स नाम पिष्टकानि अतिकठिनानि चिरकालिकानि च। अत: तानि विक्रेतृणां प्रियाणि। कथं तेषां नाम एतद् जातम्? जोसिया बेट नाम पक्तृणा तस्य इष्टिकाचुल्ल्यां स्थालिकापूर्णानि पिष्टकानि परिदग्धानि। परिचिह्नितानां पिष्टकानां ध्वनि: स्फोटकसदृश: अभवत्। अत: एतेषां पिष्टकानां नाम् क्रॅकर्स इति।



'पार्टीरिंग' इति वर्णचित्र-पिष्टकानां मध्ये अङ्गुलिमात्रं रन्ध्रं वर्तते। वलय-स्पर्धाया: कृते एतानि पिष्टकानि उपयुक्तानि। बालका: तानि अङ्गुलीयकं सदृशं अङ्गुलिषु धारयन्ति। य: तानि सर्वाणि झटिति खादति स: प्रथम: जेता।



'पेपरनूट्स्' नाम कुकीज् कपिलवर्णानि चोषणार्थं भवन्ति। हॉलण्डमध्ये एकस्मिन् प्रसिद्धविधौ 'झ्वार्ट पाएट' नाम सिंटर क्लाऊज् एतस्य सहाय्यकर्ता हस्तपूर्णानि पेपरनूट्स् मार्गस्थानां कृते क्षिपति।



युरोपमध्ये शुण्ठीब्रेड बहु प्रियम्। इंग्लण्डदेशस्य सम्राज्ञी प्रथमा एलिझाबेथ तस्या: प्रियातिथीनां कृते उपस्थापितवती।



इटलीमध्ये क्रुमिरी नाम पिष्टकानि प्रसिद्धानि। एतानि किञ्चित् वक्रीकृत्य नालसदृशे आकारे भवन्ति। एकीकृत-इटाले: प्रथमनृप: एमान्युएल द्वितीय: एतं प्रति आदरं दर्शयितुं पिष्टकानामेष: आकार:। तस्य श्मश्रु अतिविशालमासीत्।




ख्रिस्ताब्दस्य एकनवसप्ततमे शतके साधकै: मॅकरुन्स नाम पिष्टकानि कृतानि। सप्तदशतमे शतके फ्रेञ्चक्रान्तित: द्वे परिचारिके पलायिते नॅन्सी प्रति गते च। तत्र आवासार्थं यत् धनं दातव्यं तत् ताभ्यां मॅकरून्स् पिष्टकानि पक्त्वा विक्रीयैव प्राप्तम्। ते 'मॅकरून्स्' भगिन्यौ नाम्ना प्रसिद्धे।



# वर्ध्यताम् शब्दसम्पत्तिः

कति भारतीयाः भाषाः ज्ञायन्ते भवद्भिः ? अधुना चन्दमामा-साहाय्येन भारतीयाः भाषाः पठित्वा कामं भारतभ्रमणं क्रियताम् । अधस्तनं शब्दपटं दृष्ट्वा स्वभाषायां वाक्यं पठन्तु। अनन्तरं निर्देशानुसारं तदेव वाक्यम् अन्यासु भाषासु कथं वक्तव्यम् इति अवगच्छन्तु ।





| English | We will go together. | Day after tomorrow? |
|---|---|---|
| Sanskrit | वयं मिलित्वा गच्छामः। | अपि श्वः ? |
| Telugu | మనం అక్కడికి కలిసే వెళతాము.<br>मनम अक्कदिकि कलिसे वेलथमु. | ఎల్లుండి వెళుతున్నామా?<br>ऍल्लुन्दि वेळुथुन्नमा ? |
| Tamil | நாம் சேர்ந்து செல்வோம்.<br>नाम सेर्न्धु सेल्वोम. | நாளை மறுதினமா?<br>ननाले मरुधिनम ? |
| Bengali | আমরা একসাথে যাব।<br>आम्रा ग्रसाथिय जाबो. | পরশুদিন?<br>पोर्शुदिन ? |
| Marathi | आपण मिळून जाऊ या.<br>आपण मिळून जाऊया. | परवा ?<br>परवा ? |
| Kannada | ನಾವೆಲ್ಲರೂ ಜೊತೆಯಾಗಿ ಹೋಗೋಣ.<br>नावेल्लरउ जोतेयागि होगोन. | ನಾಡಿದ್ದು?<br>नादिद्दे ? |
| Oriya | ଆମେ ସମସ୍ତେ ଏକାଠି ଯିବା।<br>आमे समस्ते एकठि जिबा. | ପରଦିନ?<br>पार्दिन ? |
| Gujarati | આપણે સાથે જઈશું.<br>आपण साथे जईशुं | પરમદિવસે?<br>परमदिवसे ? |
| Assamese | আমি একেলগে যাম ।<br>आमि एहे लोगे जाम. | অহাকালিৰ পিছদিনাখন ?<br>अहाकालिर पिसदिनाखन ? |
| Malayalam | നമ്മളൊരുമിച്ച് പോകും.<br>नम्मलोरुमिछु पोकुम. | മറ്റന്നാളോ?<br>मत्तन्नलो ? |
| Santali | ᱟᱞᱮ ᱢᱤᱫ ᱛᱮᱞᱮ ᱥᱮᱱᱚᱜ-ᱟ।<br>अले मिद तेले सेनोग-आ | ᱢᱮᱭᱟᱝ?<br>मेयन्ग ? |
| Hindi | हम साथ चलेंगे।<br>हम साथ जाएगें। | परसों ?<br>परसों ? |






| English | At what time? | At three'o clock. |
|---|---|---|
| Sanskrit | कदा ? | त्रिवादनसमये। |
| Telugu | ఏ సమయంలో?<br>ए समयम्लो? | మూడు గంటల సమయంలో.<br>मुड्डु गन्तल समयम्लो. |
| Tamil | எத்தனை மணிக்கு?<br>एथनै मनिक्कु? | மூன்று மணிக்கா?<br>मून्नु मनिक्क? |
| Bengali | কটার সময়?<br>कतार समोय? | তিনটের সময়।<br>तिन टेर सोमोय. |
| Marathi | किती वाजता?<br>किती वाजता? | तीन वाजता.<br>तीन वाजता? |
| Kannada | ಎಷ್ಟು ಹೊತ್ತಿಗೆ?<br>एशतु होत्तिगे? | ಮೂರು ಗಂಟೆಗೆ<br>मुरु गम्टेगे. |
| Oriya | କେତେବେଳେ?<br>केतेबेले? | ତିନିଟା ବେଳେ।<br>तिनिटबेले? |
| Gujarati | કેટલા વાગ્યે?<br>केटला वाग्ये? | ત્રણ વાગ્યે.<br>त्रण वाग्ये. |
| Assamese | কোন সময়ত?<br>कुन क्षोमोयोत? | তিনিটা বজাত।<br>तिनिता बोजात. |
| Malayalam | എത്ര മണിക്ക്?<br>एष्ट्र मनिक्कु? | മൂന്ന് മണിക്ക്.<br>मून्नु मनिक्कु. |
| Santali | ᱛᱤᱱ ᱡᱷᱚᱜ?<br>तिन झोग? | ᱯᱮ ᱛᱟᱞᱟᱝ ᱡᱷᱚᱜ।<br>पे तलन्ग झोग. |
| Hindi | किस समय?<br>किस समय? | तीन बजे।<br>तीन बजे। |

## बोण्डाजातीयाः महिलाः किमर्थं शिरः मुण्डयन्ति?



ओडिसा राज्यस्य मल्कनगिरिजनपदे दृश्यते बोण्डानामिका आदिमजातिः। बोण्डाजातीयाः बोण्डापर्वतसानौ वसन्ति। बोण्डापर्वते सीताकुण्डम् नामकं कश्चन निर्झरः अस्ति, यत् पौराणिकगाथाम् एतां द्रढयति। यदा सीतारामौ वनवासे आस्तां तदा तौ भीकरे दण्डकारण्ये अवसताम्।

एकस्मिन् दिने सीता स्नानार्थं निर्झरस्य समीपं गतवती। स्नात्वा सीता पर्णैः विनिर्मितवस्त्राणि आच्छादयितुं धृतवती। तस्मिन् समये सीतां दृष्ट्वा काचित् बोण्डाजातीयमहिला हसितवती। खिन्नमनस्का सीता 'भवत्यः सर्वदा अर्धविवस्त्राः मुण्डितशिरस्काः भवन्तु' इति शप्तवती। तदारभ्य बोण्डामहिलाः स्वशिरः मुण्डयन्ति। अधुना अपि ताः लघुवस्त्रैः स्वमध्यभागं गुटिकामालाभिः निर्मितैः आभरणैः स्ववक्षस्थलं च आच्छादयन्ति।

## विना धनं वाणिज्यम्



२०११ वर्षे विना धनं वाणिज्यं प्रचलतीति विषयं भवन्तः विश्वसन्ति किम्? ओडिस्सा राज्ये मल्कनगिरिजनपदस्य मुन्दिगुडविपणिं पश्यन्तु, तद् द्रष्टुं शक्नुवन्ति। अस्माकं पूर्वजानां विनिमयः इति काचित् प्राचीनवाणिज्यपद्धतिः। सा अधुनापि भारते बहुभिः आदिमजातीयैः विनियुज्यते। बोण्डाजातिः एव तत्र उदाहरणम्।

बोण्डामहिलाः मुन्दिगुडविपणिं स्वस्यानीतानि विक्रयाणि शाक-फलादीनि इतरवन्यानि च स्वीकृत्य गच्छन्ति। तत्र स्थानिकवणिजां सकाशात् तण्डुलं, लवणम् इत्यादीनि नित्योपयोगिवस्तूनि स्वसामग्र्या विनिमयं कुर्वन्ति। तत्र विनिमयसन्दर्भे धनस्य विनियोगः ईषदपि न भवति।